श्रीराजस्थान-संस्कृत-कॉलेज-ग्रन्थमाला ६

प्रथमपरीक्षोपयोगि—

अभिनव-राजलक्ष्मी-टीकोपेतं

# मूलरामायणम्

( टीकात्रयोपेतम् )

संस्कर्त्ता—श्रीगुरुप्रसादशास्त्री,
व्याकरणाचार्यः दर्शनाचार्यः न्यायशास्त्री ।
[प्रिन्सिपल श्रीराजस्थान संस्कृत-कालेज]

प्रकाशक-भार्गव पुस्तकालय,
गायघाट, काशी ।

प्रथमं संस्करणम् ] १९३५ [ मूल्यं साधाणकद्वयम्

॥ श्री: ॥

# ॥ मूल-रामायणम् ॥

"अभिनवराजलक्ष्मी-तिलकाख्यटीकाद्वयविराजितम्"

तपःस्वाध्यायनिरतं तपस्वी वाग्विदां वरम् ।
नारदं परिपप्रच्छ वाल्मीकिर्मुनिपुंगवम् ॥ १ ॥

## ॥ अभिनव-राजलक्ष्मीः ॥

चञ्चत्कर्णाग्रसंस्पर्शनिरस्तभ्रमरावलिम् ।
भक्तानुग्रहवित्तं तं महागणपतिं भजे ॥ १ ॥
वन्देऽनवद्यसद्विद्याहृद्योद्योतितदिङ्मुखान् ।
मरुमण्डलमार्त्तण्डस्नेहिरामाभिधान् गुरून् ॥ २ ॥

[ अन्वयः ] तपस्वी वाल्मीकिः—तपः स्वाध्यायनिरतं वाग्विदां वरं मुनिपुङ्गवं नारदं—परिपप्रच्छ ।

[ विग्रहः ] तपश्च स्वाध्यायश्च—तपःस्वाध्यायौ, तपःस्वाध्याययोर्निरतः—तपःस्वाध्यायनिरतः, तं—तपःस्वाध्यायनिरतम् । प्रशस्तं तपोऽस्यास्तीति—तपस्वी । वाग्विदन्तीति—वाग्विदः, तेषां—वाग्विदाम् । वल्मीकस्यापत्यं पुमान्—वाल्मीकिः । मुनिषु पुङ्गवः—मुनिपुङ्गवः, तं—मुनिपुङ्गवम् ।

[ अर्थः ] तपस्वी = तपोनिष्ठः, वाल्मीकिः = तन्नामा महा-

मुनिः, तपःस्वाध्यायनिरतं = कृच्छ्रचान्द्रायणादि-वेदाध्ययनाद्यासक्तं, "तपः कृच्छ्रादि कर्मसु" इत्यमरः। "स्वाध्यायो वेदतपसोः" इति वैजयन्ती। वाग्विदां = सकलवाङ्मयपारङ्गतानां, मध्ये, वरं = श्रेष्ठं, मुनिपुङ्गवं = मुनिश्रेष्ठं, "बुधे च पुङ्गवः श्रेष्ठे" इति विश्वः। नारदं=ब्रह्मपुत्रं नारदं, परिपप्रच्छ=सविनयं पृष्टवान्।

[ भाषा ] नारदजी से वाल्मीकि जी मुनि ने पूछा कि—॥१॥

❀ तिलकः ❀

तपःस्वाध्यायेत्यादि—'श्रुत्वा चैतत्' इत्यन्तेन संबन्धः। तपस्त्वेन श्रुतः स्वाध्यायस्तपःस्वाध्यायः। "तपःस्वाध्याय इति ब्राह्मणम्" इत्यापस्तम्बोक्तेः। स्वाध्यायशब्देनाप्रायत्यानध्ययनकालदेशपरिहारादिनियमोपेततया फलवदर्थावबोधपर्यन्तं स्वशाखाध्ययनमुच्यते। तस्मिन्निरतः तदभ्यासनिरत इति यावत्। यत्तु—तपश्च स्वाध्यायश्च तपःस्वाध्यायौ, तयोर्निरतः,–तपःशब्देन चित्तप्रसादहेतुभूतं व्रतनियमादिकर्मोच्यते। यद्वा "यस्य ज्ञानमयं तपः" इति श्रुतेस्तपःशब्देन ब्रह्मविषयज्ञानमुच्यत इति, तन्न। तपोविशिष्टपुंविशेषप्रसिद्धमुनिपुंगवशब्देनैवोक्ततपःसंपत्तेः सिद्धत्वादिति कतकक्रुतः। एवं हि तपोरतमित्येव सिद्धे स्वाध्यायपदवैयर्थ्यापत्तिः। तस्मात्तपःशब्देन निदिध्यासनजन्यपरिपाकवद्ब्रह्मज्ञानमुच्यते। मुनिपुंगवशब्देन मननजन्यपरिपाकवत्त्वमेवोच्यत इति न तेन गतार्थतेत्यन्ये। वाग्विदां=स्वरूपतोऽर्थतश्च शब्दब्रह्मतत्त्वविदां—पाणिनिपतञ्जल्यादीनां मध्ये वरं = श्रेष्ठम्। मुनिशब्द उक्तार्थः। तेषु पुंगवं श्रेष्ठम्। एवं विशिष्टं नारदम्। तपस्वी–कृच्छ्रैकादश्युपवासादिलक्षणं मुख्यं तपः, "तपो नानशनात्परम्" इति श्रुतेः, स्वाध्यायरूपं च तपः, समनस्केन्द्रियाणामैकाग्र्यरूपं च तपस्तद्वान्। वाल्मीकिर्वल्मीकस्यापत्यम्,—'वल्मीकप्रभवो यस्मात्तस्माद्वाल्मीकिरित्यसौ' इति ब्रह्मवैवर्तोक्तेः। वाल्मीकप्रभवत्वेन गोणीपुत्रादिवद्गौणमस्य वल्मीकापत्यत्वं गृहीत्वेन् साधुरपत्यार्थः। यद्वा वल्मीक इति ऋषिविशेषस्य संज्ञेत्याहुः। नारदम् नराणामिदं नारमज्ञानं,—तक्ष्यति=खण्डयति ज्ञानोप-

देशेनेति नारदः—'गायन्नारायणकथां सदा पापभयापहाम्। नारदो नाशयन्नेति नृणामज्ञानजं तमः' इति नारदीयोक्तेः। तं पप्रच्छेत्यन्वयः। अत्र प्रष्टरुक्तविशेषणेन दिव्यार्थविषयश्रवणाधिकारसंपदुक्ता। वक्तुरप्युक्तविशेषणैः सार्वज्ञ्यादि प्रतिपादितम्। ग्रहणधारणहेतुशिष्यानुग्रहशक्तिमत्त्वं च प्रतिपादितम् ॥ १ ॥

**कोन्वस्मिन् साम्प्रतं लोके गुणवान् कश्च वीर्यवान्।**
**धर्मज्ञश्च[1] कृतज्ञश्च[2] सत्यवाक्यो[3] दृढव्रतः ॥ २ ॥**

॥ अभिनव-राजलक्ष्मीः ॥

[अन्वयः] साम्प्रतम्, अस्मिन् लोके कः नु गुणवान्? कश्च वीर्यवान्, धर्मज्ञश्च, कृतज्ञश्च, सत्यवाक्यः दृढव्रतः [च कः अस्ति?]

[ विग्रहः ] प्रशस्ता गुणाः सन्त्यस्य–गुणवान्। वीर्यमस्त्यस्य-वीर्यवान्। धर्मं जानातीति–धर्मज्ञः। कृतं जानातीति–कृतज्ञः। सत्यं वाक्यं यस्य–सत्यवाक्यः। दृढं व्रतं यस्यासौ—दृढव्रतः।

**[ अर्थः ] साम्प्रतम् = इदानीम्, अस्मिन् लोके = भूलोके, को नु गुणवान् = कः खलु प्रशस्तगुणशाली ?, कश्च वीर्यवान् = कश्च पराक्रमशाली ?, धर्मज्ञश्च = धर्मतत्त्वदर्शी, कः ?। कृतज्ञश्च = [1]उपकारज्ञश्च कः ?। सत्यवाक्यः = [2]सत्यभाषी कः ?। [3]दृढव्रतः = अचलसङ्कल्पः–कः ?।**

[ भाषा ] इस भूलोक में आजकल गुणी, पराक्रमी, धर्मज्ञ, कृतज्ञ, सत्यवादी, दृढ़-निश्चय कौन है ? ॥२॥

---

१ "कथञ्चिदुपकारेण कृतेनैकेन तुष्यति। न स्मरत्यपकाराणां शतमप्यात्मवत्तया" इति। २ "अनृतं नोक्तपूर्वं मे न च वक्ष्ये कदाचन"ति भगवदुक्तेः। ३ "अप्यहं जीवितं जह्यां त्वां वा सीते! सलक्ष्मणाम्। नहि प्रतिज्ञां संश्रुत्य ब्राह्मणेभ्यो विशेषतः ॥" इति —भगवदुक्तेः।

❀ तिलकः ❀

अथ प्रश्नमभिनयति—को न्विति। नुशब्दो वितर्के। सांप्रतं=वर्तमानकालेऽस्मिँल्लोके=भूलक्षणे, को नु गुणवान् ?। प्रशस्तबहुगुणवानित्यर्थः। भूमप्रशंसादौ मतुप्। अस्यैव प्रपञ्चः—कश्च वीर्यवानित्यादि। दिव्यास्त्रबलादिजशक्तिविशेषेण पराभिभवसामर्थ्यं—वीर्यं, तद्वान्। कश्च श्रौतस्मार्तसकलधर्मरहस्यज्ञः। बह्वीमप्यपकृतिमुपेक्ष्यैकामप्युपकृतिं बह्वीं मन्यत इति कृतज्ञः। सत्यवाक्यः = सर्वावस्थास्वपि यथाश्रुतदृष्टतत्त्वार्थवक्ता। दृढव्रतः= आपद्यपि धर्माय परिगृहीतव्रतविशेषस्य त्यागरहितः ॥ २ ॥

**चारित्रेण च को युक्तः सर्वभूतेषु को हितः।**
**विद्वान् कः, कः समर्थश्च कश्चैकप्रियदर्शनः ॥ ३ ॥**

❀ अभिनव-राजलक्ष्मीः ❀

[ अन्वयः ] कश्च चारित्रेण युक्तः ? कश्च सर्वभूतेषु हितः ? विद्वान् कः ? समर्थश्च कः ? एकप्रियदर्शनश्च कः ?।

[ विग्रहः ] चरित्रमेव चारित्रं, तेन—चारित्रेण। सर्वाणि च तानि भूतानि—सर्वभूतानि, तेषु—सर्वभूतेषु। वेत्ति —इति— विद्वान्। प्रियं दर्शनं यस्यासौ—प्रियदर्शनः, एकश्चासौ प्रियदर्शनश्च—एकप्रियदर्शनः।

[ अर्थः ] [ इहलोके साम्प्रतं-] कश्च = को नु, चारित्रेण = शीलेन, युक्तः = समन्वितः ?। कश्च सर्वभूतेषु=सकलेषु प्राणिषु, हितः = हितकारकः, विद्वान् = शास्त्रतत्त्वदर्शी कः = को नु ? "विद्वान् विपश्चित् दोषज्ञः" इत्यमरः। समर्थश्च = सकलकार्यनिर्वाहकश्च, कः = को नु ?। एकप्रियदर्शनः = अद्वितीयः कमनीयः, कः = को नु ?—अस्ति।

[ भाषा ] शीलवान्, हितैषी, पण्डित, समर्थ, सुन्दर कौन है ? ॥३॥

❀ तिलकः ❀

**चारित्रेणेति**—चरित्रमेव चारित्रम्। स्वार्थिकोऽण्। वृत्तसंपदनेनोच्यते। सर्वभूतेषु सर्वप्राणिषु=मध्ये कः पुमान्हितः। ऐहिकामुष्मिकहितावहोऽशत्रुभ्यः। यत्तु–सर्वप्राणिषु सापराधिष्वपि हितकरणशील इति व्याचक्षते, तत्तु हितयोगे चतुर्थ्यापत्तेरयुक्तम्। विद्वानात्मानात्मसकलपदार्थतत्त्वज्ञः। **समर्थो**—लौकिकव्यवहारे प्रजारञ्जनादौ चातुर्यं—सामर्थ्यं,—तद्वान्। कामाधिकसौन्दर्यवत्त्वेन—नित्यसुखरूपत्वेन चैकप्रियं=केवलप्रियं—दुःखासंभिन्नप्रियत्ववद्दर्शनं यस्य सः। यत्त्वेकं प्रति प्रियं दर्शनं यस्येति तदयुक्तम्, सर्वप्रियत्वस्य प्रतिपादनात्। एकोऽद्वितीयः स चासौ प्रियदर्शनश्चेत्यर्थं इति—तीर्थः ॥ ३ ॥

**आत्मवान् को जितक्रोधो द्युतिमान् कोऽनसूयकः।**
**कस्य बिभ्यति देवाश्च जातरोषस्य संयुगे ॥ ४ ॥**

❀ अभिनव-राजलक्ष्मीः ❀

[ अन्वयः ] आत्मवान् कः ? जितक्रोधः कः ? द्युतिमान् कः ? अनसूयकः कः ?। संयुगे जातरोषस्य कस्य देवाश्च बिभ्यति ?।

[ विग्रहः ] प्रशस्त आत्माऽस्त्यस्य–आत्मवान्। जितः क्रोधो येनासौ–जितक्रोधः। द्युतिरस्त्यस्य–द्युतिमान्। असूयते इति–असूयकः, न असूयकः–अनसूयकः। जातो रोषो यस्यासौ–।

**[ अर्थः ] आत्मवान् = वशीकृतेन्द्रियग्रामः, "आत्मा यत्नो॰ धृतिर्बुद्धि"रित्यमरः। कः ? = अस्मिन् लोके साम्प्रतं कः ?। जितक्रोधः = विजितकामक्रोधलोभः, कः = को नु ?। द्युतिमान्= कान्तिमान्, कः = को नु ?। अनसूयकः = असूयारहितः— [ परगुणासहिष्णुरसूयकः, तद्भिन्नः ] कः = को नु ? संयुगे = युद्धे, 'संयुगोऽस्त्री रणे' इति कोशः। जातरोषस्य = जातकोपस्य,**

कस्य = कस्मात् पुंसः, देवाश्च = देवा अपि, बिभ्यति = भीता भवन्ति, देवेभ्योऽप्यधिकः कः ?—इत्यर्थः ।

[ भाषा ] धैर्यशाली, शान्त, कान्तिमान्, सहिष्णु, कौन है ? ॥४॥

❀ तिलकः ❀

आत्मवानिति—वशीकृतान्तःकरण इत्यर्थः । जितक्रोधो–निन्दा-हिंसादिजनकचित्तवृत्तिविशेषरहितः । क्रोधोऽत्र कामादीनामप्युपलक्षणम् । द्युतिः—सर्वलोकस्य दिदृक्षाजनको देहकान्तिविशेषस्तद्वान् । अनसूयको-विद्यैश्वर्यादितपःसु परोन्नत्यासहनमसूया—तद्रहितः । असूयतेः कण्ड्वादिय-गन्तादुपतापार्थाण्ण्वुल् । संयुगे=युद्धकाले जातरोषस्य कस्य रोषाद्देवाश्च = देवा अपीन्द्रादयोऽपि,—अपिना असुराश्च बिभ्यति–अतिबलवतोऽस्मानप्यस्य क्रोधः संहरिष्यतीति भयं प्राप्नुवन्तीत्यर्थः । कस्येति—संबन्धसामान्ये षष्ठी-त्यन्ये । कस्य संयुगे—कस्माद्बिभ्यतीति—तीर्थः ॥ ४ ॥

**एतदिच्छाम्यहं श्रोतुं परं कौतूहलं हि मे ।**
**महर्षे ! त्वं समर्थोऽसि ज्ञातुमेवम्विधं नरम् ॥ ५ ॥**

❀ अभिनव-राजलक्ष्मीः ❀

[ अन्वयः ] महर्षे ! अहम् एतत् श्रोतुमिच्छामि, हि मे परं कौतूहलम्, त्वम् एवम्विधं नरं ज्ञातुं समर्थोऽसि ।

[ विग्रहः ] महांश्चासौ ऋषिश्च–महर्षिः, तत्सम्बुद्धौ हे महर्षे ! ।

[ अर्थः ] महर्षे = हे महामुने नारद ! अहं = वाल्मीकि-रहम्, एतत् = पूर्वोक्तं, श्रोतुं = श्रवणं कर्तुम्, इच्छामि = अभिलषामि, हि = यतः, मे = मम, परम् = अत्यन्तं, कौतूहलम् = औत्कण्ठ्यम्, कौतुकमिति यावत्, "कौतूहलं कौतुकञ्च"त्यमरः । त्वं = भवान्, एवम्विधं = सकलगुणगणालङ्कृतं, नरं = पुरुषो-त्तमं, ज्ञातुं = वेदितुं, समर्थः = कुशलः, असि = भवसि ।

[ वाच्यप० ] मया श्रोतुमिष्यते, त्वया भूयते ।

[ भाषा ] हे महामुने ! मैं यह आपसे सुनना चाहता हूँ ॥५॥

❀ तिलकः ❀

एतदित्युक्तगुणसामान्यापेक्षया नपुंसकम् । एतद्दिव्यपुरुषगुणजातं कस्यास्तीति श्रोतुमहमिच्छामि । उक्तगुणसामाग्र्यस्यैकत्र दुर्लभत्वात्तादृशपुरुषविशेषज्ञाने—मे परं = सर्वस्मादपि कौतुकान्तरादुत्कटं कौतुकं वर्तते । नन्वेवंविधनरो मयापि दुर्ज्ञेयो? नेत्याह—हि यतो महर्षे=अपरोक्षीकृताशेषार्थ? त्वमेवंविधमुक्तगुणवन्तं नरं दिव्यपुरुषं ज्ञातुं समर्थोऽसि = सर्वलोकप्रसिद्धसामर्थ्योऽसि । तस्मात्त्वत्त एव श्रोतुमिच्छामीति पूर्वेण संबन्धः ॥ ५ ॥

**श्रुत्वा चैतत् त्रिलोकज्ञो वाल्मीकेर्नारदो वचः ।**
**श्रूयतामिति चामन्त्र्य, प्रहृष्टो वाक्यमब्रवीत् ॥ ६ ॥**

❀ अभिनव-राजलक्ष्मीः ❀

[ अन्वयः ] वाल्मीकेः एतत् वचः श्रुत्वा त्रिलोकज्ञो नारदश्च 'श्रूयताम्'—इति आमन्त्र्य प्रहृष्टः वाक्यम् अब्रवीत् ।

[ विग्रहः ] त्रयो अवयवा यस्यासौ—त्र्यवयवः, त्र्यवयवश्चासौ—लोकश्च-त्रिलोकः, तं जानातीति त्रिलोकज्ञः । [ यद्वा—त्रयो लोका यस्मिन् ब्रह्माण्डे—तत् त्रिलोकं, तज्जानातीति विग्रहः । ]

[अर्थः] वाल्मीकेः = आदिकवेः, एतत् = इत्येवं, वचः = प्रश्नवाक्यं, श्रुत्वा = अवधार्य, त्रिलोकज्ञः = त्रैलोक्यज्ञः, नारदः = नारदो महामुनिः, श्रयताम् = सावहितेन भवता आकर्ण्यताम्, इति = इत्थम्, आमन्त्र्य = तं सावधानं कृत्वा, प्रहृष्टः = प्रमुदितः सन्, वाक्यं = वचनम्, अब्रवीत् = उवाच ।

[वाच्यप०] प्रहृष्टेन वाक्यमवोचि ।

[ भाषा ] यह सुन नारद भगवान् बड़े प्रसन्न हुए, और बोले ॥६॥

❀ तिलकः ❀

श्रुत्वेति—एतदुक्तप्रश्नजातम् । त्रिलोकज्ञः भूर्भुवःस्वर्लोकलक्षणांस्त्र्यवयवलोकांस्तत्रत्यवृत्तान्तं जानातीत्यर्थः । एवं च द्विगुत्वाभावान्न ङीप् । नारदो वाल्मीकेरेतद्वचः श्रुत्वा श्रूयतामिति चामन्त्र्यैकाग्र्यसिद्धयेऽभिमुखीकृत्य स्वगतस्यार्थस्य चिरं प्रतिपिपादयिषितस्य जिज्ञासुलाभेन प्रहृष्टो भूत्वा वक्ष्यमाणं वाक्यमब्रवीत् ॥ ६ ॥

**बहवो दुर्लभाश्चैव ये त्वया कीर्तिता गुणाः ।**
**मुने ! वक्ष्याम्यहं बुद्ध्वा तैर्युक्तः श्रूयतां नरः ॥ ७ ॥**

❀ अभिनव-राजलक्ष्मीः ❀

[अन्वयः] मुने ! ये बहवः दुर्लभाश्चैव गुणाः त्वया कीर्त्तिताः तैः युक्तः नरः श्रूयताम्, अहं बुध्वा वक्ष्यामि ।

[ विग्रहः ] दुःखेन लब्धुं शक्याः—दुर्लभाः ।

**[अर्थः] मुने ! = हे वाल्मीके !, ये = पूर्वोक्ताः, बहवः = अनेके, दुर्लभाश्चैव = एकत्र अलभ्याश्चैव, गुणाः = शौर्यवीर्यगाम्भीर्यादयः, त्वया = भवता, कीर्त्तिताः = कथिताः, तैः = सकलैः, गुणैः, युक्तः, = समन्वितः, नरः = पुमान्, श्रूयताम् = आकर्ण्यताम्, अहं = त्रिलोकीवित् नारदः, बुध्वा = विचिन्त्य, वक्ष्यामि = कथयिष्यामि ।**

**[वाच्य०] मया स वक्ष्यते, त्वं शृणु ।**

[ भाषा ] हे मुने ! पूर्वोक्त सब गुण एक में दुर्लभ हैं, पर मैं विचार कर कहता हूँ, सुनो ॥ ७ ॥

❀ तिलकः ❀

**बहव इति**—ये बहवो गुणास्त्वया कीर्तितास्त एकत्र प्राकृतपुरुषमात्रे दुर्लभा एव । चः—पादपूरणे । अथापि हे मुने ! यस्तैर्युक्तस्तं बुद्धा

स्मृत्वाहं वक्ष्यामि, तादृशो नरः श्रूयताम्। प्राप्तकाले लोट्। तस्य श्रवणं ते प्राप्तकालमित्यर्थः ॥ ७ ॥

इक्ष्वाकुवंशप्रभवो रामो नाम जनैः श्रुतः।
नियतात्मा महावीर्यो द्युतिमान् धृतिमान् वशी ॥ ८ ॥

❀ अभिनव-राजलक्ष्मीः ❀

[ अन्वयः ] इक्ष्वाकुवंशप्रभवः नियतात्मा महावीर्यः द्युतिमान् धृतिमान् वशी—जनैः श्रुतः—रामो नाम अस्ति।

[ विग्रहः ] इक्ष्वाकोर्वंशः–इक्ष्वाकुवंशः, स प्रभवो यस्यासौ–इक्ष्वाकुवंशप्रभवः। नियत आत्मा यस्यासौ–नियतात्मा। महत् वीर्यं यस्यासौ–महावीर्यः। द्युतिरस्त्यस्य–द्युतिमान्। धृतिरस्त्यस्य धृतिमान्। –वशोऽस्यास्तीति—वशी। रमन्ते योगिनोऽस्मिन्–रामः।

[अर्थः] इक्ष्वाकुवंशप्रभवः = इक्ष्वाकुकुलोत्पन्नः, "इक्ष्वाकुः कटुतुम्ब्यां स्त्री सूर्यवंश्यनृपे पुमान्" इत्यमरः। नियतात्मा = संयतचित्तः। महावीर्यः = महापराक्रमः, द्युतिमान् = कान्तिमान्, धृतिमान् = धैर्यशाली, वशी = जितेन्द्रियः, जनैः = तत्त्वज्ञैः लोकैः, श्रुतः = ज्ञातः, रामो नाम = 'राम' इति प्रसिद्धः–अस्तीति शेषः।

[वाच्यप०] वशिना रामेण भूयते।

[ भाषा ] इक्ष्वाकुवंशोत्पन्न श्री रामचन्द्रजी संयमी, पराक्रमी सुन्दर और धीर हैं ॥ ८ ॥

❀ तिलकः ❀

इक्ष्वाक्विति—इक्ष्वाकुवंशात्प्रभव आविर्भावो यस्य स तथा। रामो

१ सूर्यतनयस्य वैवस्वतमनोः ज्येष्ठः पुत्र इक्ष्वाकुर्नाम।

नाम = राम इति नाम्ना प्रसिद्धो जनैश्च श्रुतोऽस्ति। तस्मिन्नेवैकत्र सर्वे त्वत्पृष्टा गुणाः, अन्ये च गुणा इति शेषः। तच्चेदं यौगिकं नाम। रमन्ते योगिनोऽस्मिन्, यद्वा रमयति स्वकानिति योगस्य प्रदर्शनात्। तत्रान्त्ये नारकपूरुषादिवत् "अन्येषामपि दृश्यते" इति दीर्घः। तानेव गुणानाह· नियतात्मा निगृहीतान्तःकरणः। वीर्यं व्याख्यातम्। द्युतिः कान्तिः। आपत्संपदोरविकृतिश्चित्तस्य धृतिस्तद्वान्। वशी=जिताशेषबहिरिन्द्रियः ॥८॥

**बुद्धिमान् नीतिमान् वाग्मी श्रीमाञ्छत्रुनिबर्हणः।**
**विपुलांसो महाबाहुः कम्बुग्रीवो महाहनुः ॥ ९ ॥**

❀ अभिनव-राजलक्ष्मीः ❀

[अन्वयः] बुद्धिमान्, नीतिमान्, वाग्मी, श्रीमान् शत्रुनिबर्हणः, विपुलांसः महाबाहुः, कम्बुग्रीवः, महाहनुः। [रामः जनैः श्रुतः]

[विग्रहः] बुद्धिरस्त्यस्य-बुद्धिमान्। नीतिरस्त्यस्य–नीतिमान्, प्रशस्ता वाचःसन्त्यस्य–वाग्मी, श्रीरस्त्यस्य–श्रीमान्, शत्रून् निबर्हयति–शत्रुनिबर्हणः। विपुलौ अंसौ यस्य विपुलांसः। महान्तौ बाहू–यस्य–महाबाहुः। कम्बुरिव ग्रीवा यस्य कम्बुग्रीवः। महत्यौ हनू यस्यासौ–महाहनुः।

[अर्थः] बुद्धिमान्ः = मतिमान्, नीतिमान् = नीतिविशारदः, वाग्मी = वाचोयुक्तिपटुः "वाचोयुक्तिपटुर्वाग्मी"त्यमरः। श्रीमान् = लक्ष्मीवान्, शत्रुनिबर्हणः = रिपुविनाशनः, विपुलांसः = विपुलस्कन्धः, "स्कन्धो भुजशिरोंसोऽस्त्री"त्यमरः। महाबाहुः = आजानुबाहुः, कम्बुग्रीवः = कम्बुकन्धरः, "कम्बु-

१ कक्षः कुक्षिश्च वक्षश्च घ्राणस्कन्धौ ललाटिका। सर्वभूतेषु निर्दिष्टा उन्नतास्ते शुभप्रदाः ॥ इति सामुद्रिके। २ "आजानुलम्बिनौ बाहू वृत्तपीनौ महीश्वरे" इति सामुद्रिके।

ग्रीवा त्रिरेखा स्या" दित्यमरः। महाहनुः = दृढमांसलहनुः, "अधस्ताच्चिबुकं गण्डकपोलौ तत्परा हनुः" इत्यमरः। एवं-विधो रामो जनैः श्रुतोऽस्तीति भावः॥

[भाषा] श्रीरामजी बुद्धिमान्, नीतिमान्, वक्ता, धनी, शत्रुनाशन, पुष्ट स्कन्ध, महाबाहु, और सुन्दरकण्ठ हैं॥ ९॥

❀ तिलकः ❀

बुद्धिमानिति—प्रशस्तबुद्धिः बुद्धेः, प्राशस्त्यं च सकृद्गृहीताविस्मरणा-वापोह्वापादिशक्तिमत्त्वम्। सर्वत्र प्रशंसादौ मतुप्। नीतिः कामन्दकादि-प्रसिद्धराजनीतिस्तद्वांस्तज्ज्ञाता। वाग्मी प्रशस्तवाक्। श्रीमान्सर्वातिशायि-शोभैश्वर्यादियुक्तः। यद्वा "ऋचः सामानि यजूंषि। सा हि श्रीरमृता सताम्" इत्युक्तश्रौतश्रीमान्। शत्रूणां = बाह्यान्तराणां, निबर्हणो = नाशकर्ता। बाहुलकात्कर्तरि ल्युट्। विपुलांस इत्यादिना सामुद्रिकलक्षणं कथ्यते—

विपुलौ मांसलोन्नतावंसौ भुजशिरसी यस्य सः। 'स्कन्धो भुजशिरोंऽसः' इति कोशः। अस्य सुलक्षणत्वं च वररुचिनोक्तम्—'कक्षः कुक्षिश्च वक्षश्च घ्राणस्कन्धौ ललाटिका। सर्वभूतेषु निर्दिष्टा उन्नतास्ते सुखप्रदाः' इति। महाबाहुः "आन्महतः—" इत्यात्वम्। 'शिरो ललाटश्रवणे ग्रीवा वक्षश्च हृत्तथा। उदरं पाणिपादं च पृष्ठं दश महत्सुखम्' इति ब्राह्मेऽस्य सुलक्षण-त्वमुक्तम्। कम्बुग्रीवः = कम्बुवद्रेखात्रयविशिष्टग्रीवः। महाहनुर्मांसलकपोला-परभागः। 'पूर्णमांसलहनुस्तु भूपतिः' इति संहिता॥ ९॥

महोरस्को महेष्वासो गूढजत्रुररिन्दमः।
आजानुबाहुः सुशिराः सुललाटः, सुविक्रमः॥ १०॥

---

१ कम्बुग्रीवा त्रिरेखा स्यात् कम्बुग्रीवस्तु भूपतिः" इति सामुद्रिके। २ "पूर्ण-मांसलहनुस्तु भूपतिः।" मांसलौ तु हनू यस्य भवतस्त्वीषदुन्नते। स नरो मिष्टम-श्नाति यावदायुः सुखान्वितः॥" इति सामुद्रिके।

❀ अभिनव-राजलक्ष्मीः ❀

[ अन्वयः ] महोरस्कः, महेष्वासः, गूढजत्रुः, अरिन्दमः, आजानुबाहुः, सुशिराः, सुललाटः, सुविक्रमः ।

[ विग्रहः ] महत् उरो यस्यासौ—महोरस्कः, महान् इष्वासो यस्यासौ—महेष्वासः । गूढे जत्रुणी यस्यासौ—गूढजत्रुः । अरीन् दमयतीति—अरिन्दमः । आजानु बाहू यस्यासौ—आजानुबाहुः । सुष्ठु शिरो यस्यासौ—सुशिराः । शोभनं ललाटं यस्यासौ—सुललाटः । शोभनो विक्रमो यस्यासौ—सुविक्रमः ।

[ अर्थः ] महोरस्क[1] = विस्तीर्णवक्षःस्थलः, "उरो वत्सं च वक्षश्चे"त्यमरः । महेष्वासः = महाकार्मुकः, "धनुश्चापौ धन्वशरासनकोदण्डकार्मुकम्, इष्वासोपि"त्यमरः । गूढजत्रुः = निगूढस्कन्धसन्धिः, "स्कन्धो भुजशिरोंसोऽस्त्री सन्धी तस्यैव जत्रुणी"इत्यमरः अरिन्दमः=शत्रुदमनः, आजानुबाहुः = आजानुलम्बितभुजः, सुशिराः = प्रशस्तमस्तकः, "उत्तमाङ्गं शिरः शीर्षं मूर्धा ना मस्तकोऽस्त्रिया"मित्यमरः । सुललाटः = उन्नतललाटः, "ललाटमलिकं गोधि"रित्यमरः । सुविक्रमः = प्रशस्तगमनः, "क्रान्तौ च विक्रमः"इत्यमरः [—रामो जनैः श्रुतोऽस्ति] ।

[ भाषा ] विशाल वक्षस्थल, धनुष की रेखा, दबी हुई कण्ठास्थि शत्रुमारक रेखा, लम्बी भुजा, सुन्दर मस्तक चौड़ा ललाट आदि शुभ लक्षणों से सुशोभित हंसगति भगवान् रामचन्द्र प्रसिद्ध हैं ॥ १० ॥

---

१ तदुक्तं-स्थिरं विशालं काठिनमुन्नतं मांसलं समम् । वक्षो यस्य महीपालस्तत्समो वा भवेन्नरः ॥ विषमैर्जत्रुभिर्निःस्वाः अतिसूक्ष्मैश्च मानवाः । उन्नतैर्भोगिनो निम्नैर्निःस्वाःपीनैर्नराधिपाः ॥ दीर्घभ्रूबाहुमुष्कश्च चिरजीवी धनी नरः । समवृत्तशिराश्चैव च्छात्राकारशिरास्तथा । एकच्छत्रां महीं भुंक्ते दीर्घमायुश्च विन्दति अर्धचन्द्रनिभं तुङ्गं ललाटं यस्य स प्रभुः । सिंहर्षभगजव्याघ्रगतयो मनुजा मुने । सवत्र सुखमेधन्ते सर्वत्र जयिनस्तथेति सामुद्रिके ।

॥ तिलकः ॥

**महोरस्क इति**—महद्विशालमुरो यस्य सः । 'उरः शिरो ललाटं च' इत्युपक्रम्य 'विशालास्ते सुखप्रदाः' इत्युक्तेः । महेष्वासो महानिष्वासो धनुरस्य । गूढजत्रुर्गूढे–मांसलत्वान्निमग्ने–जत्रुणी वक्षोंऽससंधिगते अस्थिनी यस्य । अरिन्दमो निजभक्तानामरीन्कामादीन्निजभक्त्यन्तरायकर्तृपापानि वा दमयतीत्यरिन्दमः । यद्वा अरिन्दम इति राज्ञोऽन्वर्थसंज्ञा । शत्रुञ्जय इतिवत् । आजानुबाहुर्जानुपर्यन्तदीर्घबाहुः । 'दीर्घभ्रूबाहुमुष्कश्च चिरञ्जीवी धनी नरः' इति ब्राह्मे । सुशिराः 'समवृत्तशिराश्चैव च्छत्राकारशिरास्तथा । एकच्छत्रां महीं भुङ्क्ते दीर्घमायुश्च विन्दति' इति नारदः । सुललाटो रेखाधिकललाटः । 'ललाटे यस्य दृश्यन्ते चतुस्त्रिद्वयेकरेखिकाः । शतद्वयं शतं षष्टिस्तस्यायुर्विंशतिस्तथा' इति कात्यायनः । सुविक्रमो गजसिंहादिगतिसदृशगतिः, विक्रमः पादविक्षेपः । 'स्वरो गतिश्च नाभिश्च गम्भीरः स प्रशस्यते' इति ब्राह्मे ॥ १० ॥

**समः समविभक्ताङ्गः स्निग्धवर्णः प्रतापवान् ।**
**पीनवक्षा विशालाक्षो लक्ष्मीवाञ्छुभलक्षणः ॥ ११ ॥**

॥ अभिनव-राजलक्ष्मीः ॥

[ अन्वयः ] [१]समः सुविक्ताङ्गः स्निग्धवर्णः प्रतापवान् पीनवक्षाः विशालाक्षः लक्ष्मीवान् शुभलक्षणः— ।

[ विग्रहः ] समानि विभक्तानि अङ्गानि यस्यासौ—समविभक्ताङ्गः । स्निग्धो वर्णो यस्यासौ–स्निग्धवर्णः । प्रतापोऽस्त्यस्य-प्रतापवान् । पीनं वक्षो यस्यासौ–पीनवक्षाः । विशाले अक्षिणी यस्यासौ–विशालाक्षः । प्रशस्ता लक्ष्मीरस्त्यस्य–लक्ष्मीवान् । शुभानि लक्षणानि यस्यासौ—शुभलक्षणः ।

---

१ भ्रुवौ नासापुटौ नेत्रकर्णावोष्ठौ च चूचुके । कूर्परौ मणिबन्धौ च जानुनी वृषणौ कटी । करौ पादौ च सुस्फीतौ यस्य स्युः स तु भूपतिः । स्निग्धेन्द्रनीलवर्णस्तु भोगं विन्दति पुष्कलम् ॥ इति सामुद्रिके ।

[ अर्थः ] समः = नात्युच्चो नातिह्रस्वः, समविभक्ताङ्गः = यथा योग्यावस्थितसकलाङ्गः, स्निग्धवर्णः = मसृणवर्णः "चिक्कणं मसृणं स्निग्ध" मित्यमरः। प्रतापवान् = प्रभोद्भासितः, पीनवक्षाः = पीवरकुक्षिः, विशालाक्षः = विशाललोचनः, लक्ष्मीवान् = शोभान्वितः, शुभलक्षणः = सकलशुभलक्षणसंयुतः [ श्रीरामचन्द्रोऽस्तीति पूर्वेणान्वयः ]।

[ भाषा ] उनका शरीर का आकार प्रकार मध्यम है, शरीर कान्तिमान् है, विशाल वक्षस्थल है, बड़े २ नेत्र हैं, सभी शुभ लक्षण हैं ॥ ११ ॥

❀ तिलकः ❀

सम इति—समो नातिदीर्घो नातिह्रस्वः। 'षण्णवत्यङ्गुलोत्सेधो योनांशः स दिवौकसाम्' इत्युक्तेः। सामान्यन्यूनानधिकपरिमाणानि विभक्तानि पृथग्भूतान्यङ्गान्यवयवा यस्य सः। 'भ्रुवौ नासापुटे नेत्रे कर्णावोष्ठौ च चूचुके। कूर्परौ मणिबन्धौ च जानुनी वृषणौ कटी ॥ करौ पादौ स्फिजौ यस्य समौ ज्ञेयः स भूपतिः' इत्युक्तेः। स्निग्धवर्णः स्निग्धश्यामलवर्ण इत्यर्थः। 'स्निग्धेन्द्रनीलवर्णस्तु भोगं विन्दति पुष्कलम्' इत्युक्तेः। प्रतापः स्मृतिमात्रेण रिपुहृदयविदारणक्षमं पौरुषं तद्वान्। 'प्रतापौ पौरुषातपौ' इति कोशः। पीनवक्षा मांसलसमोन्नतवक्षाः। विशालाक्षो विस्तृतायतनेत्रः। 'नासिका चक्षुषी कर्णौ यस्यायतौ' इत्युक्तेः। लक्ष्मीवान्सीतारूपलक्ष्मीशक्तिमान् सर्वावयवसौन्दर्यवान्वा। मोपधत्वाद्वत्वम्। एवमुक्तरीत्या शुभानि सामुद्रिकशास्त्रोक्तानि लक्षणानि यस्य स शुभलक्षणः ॥ ११ ॥

धर्मज्ञः सत्यसन्धश्च प्रजानां च हिते रतः।
यशस्वी ज्ञानसम्पन्नः शुचिर्वश्यः समाधिमान् ॥१२॥

❀ अभिनव-राजलक्ष्मीः ❀

[ अन्वयः ] धर्मज्ञः सत्यसन्धश्च प्रजानाञ्च हिते रतः, यशस्वी ज्ञानसम्पन्नः शुचिः वश्यः समाधिमान्।

[ विग्रहः ] धर्मं जानाति धर्मज्ञः । सत्या सन्धा यस्यासौ-सत्यसन्धः । प्रशस्तं यशोऽस्त्यस्य—यशस्वी । ज्ञानेन सम्पन्नः—ज्ञानसम्पन्नः । समाधिरस्त्यस्य—समाधिमान् ।

[ अर्थः ] धर्मज्ञः = धर्मतत्त्वदर्शी, सत्यसन्धश्च दृढप्रतिज्ञश्च, "प्रतिज्ञानेऽवधौ सन्धा"-इति वैजयन्ती। प्रजानाञ्च=लोकानाञ्च, हिते = हितसाधने, रतः = तत्परः । यशस्वी = कीर्त्तिसम्पन्नः, ज्ञानसम्पन्नः = ज्ञानी, शुचिः = शुभाचारः = वश्यः = गुरुवृद्ध-तपस्वीवशम्वदः, समाधिमान् = वशीकृतचित्तः, "समाधिर्योग चिन्तन" मिति कोषान्तरं—भूषणे। समाहितचित्तो योगी।

[ भाषा ] वे धर्मज्ञ दृढ प्रतिज्ञ, हितकारी, यशस्वी ज्ञानी और शुद्ध हैं॥१२॥

❀ तिलकः ❀

धर्मज्ञ इति—सत्याऽमोघा सन्धा 'सकृदेव प्रपन्नाय तवास्मीति च याचते । अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतं मम' इत्यादिरूपिणी प्रतिज्ञा यस्य । यशस्वी रावणवधादिना दिव्ययशःसंपन्नः । ज्ञानसम्पन्नो ब्रह्मज्ञान-परिपूर्णः । अतएव जटायुषं प्रति 'मया त्वं समनुज्ञातो गच्छ लोकाननुत्त-मान्' इत्युक्तिः संगच्छते । ब्रह्मज्ञस्यैव ब्रह्मोपदेशेऽधिकारात् । विना ब्रह्मो-पदेशमनुत्तमलोकावाप्त्यसंभवात् । न विद्यन्ते उत्तमा येभ्यस्तेऽनुत्तमाः । 'आत्मानं मानुषं मन्ये रामं दशरथात्मजम्' इत्यादिवचस्तु मायामात्र-मित्यन्यत्र विस्तरः । शुचिः प्रातः स्नानादिना प्राणायामाभ्यासादिना प्रत्याहारादिजन्यरागद्वेषहानेन च मायिकशरीरत्वाच्च नित्यं बाह्यान्तरशुद्धः । वश्यः पित्राचार्यदेवेषु । विनीतः समाधिमान्निजतत्त्वसमाधिमान् ॥ १२ ॥

**प्रजापतिसमः श्रीमान् धाता रिपुनिषूदनः ।**
**रक्षिता जीवलोकस्य धर्मस्य परिरक्षिता ॥ १३ ॥**

❀ अभिनव-राजलक्ष्मीः ❀

[ अन्वयः ] प्रजापतिसमः श्रीमान् धाता रिपुनिषूदनः, जीव-लोकस्य रक्षिता, धर्मस्य परिरक्षिता ।

[ विग्रहः ] प्रजानां पतिः–प्रजापतिः प्रजापतिना समः–प्रजापतिसमः । श्रीरस्त्यस्य श्रीमान् । रिपून् निषूदयति–रिपुनिषूदनः । जीवानां लोकः–जीवलोकः, तस्य–जीवलोकस्य ।

[ अर्थः ] प्रजापतिसमः = विधातृसदृशः "स्रष्टा प्रजापतिर्वेधा विधाता विश्वसृड् विधि" रित्यमरः । श्रीमान् = शोभान्वितः, धाता = प्रजापालकः, रिपुनिषूदनः = शत्रुनाशनः, जीवलोकस्य = प्राणिसङ्घस्य, रक्षिता=पालकः, धर्मस्य = श्रुतिस्मृतिसदाचारप्राप्तधर्मस्य, परिरक्षिता = नितरां पालकः—"रामो नाम जनैःश्रुतः" इति पूर्वेण सम्बन्धः ।

[ भाषा ] प्रजापति की जगत् की रक्षा करनेवाले, धर्मके संस्थापक भगवान रामचन्द्र हैं ॥ १३ ॥

❀ तिलकः ❀

**प्रजापतीति**—प्रजापतिसमः यद्यपि रामो ब्रह्मैव तथापि मानुषधर्माणां शोकमोहादीनां मायिकानां तत्र दर्शनेनौपाधिकभेदमादाय तत्समत्वोक्तिः । भार्गवलोकप्रतिबन्धरूपाज्जटायुमोक्षप्रदानरूपात्स्वेन सह सर्वायोध्यावासिजनस्य सशरीरस्य ब्रह्मलोकनयनरूपाच्च कारणात्तत्समत्वम् । सर्वथा स्वतन्त्रस्यैवेदृशेषु योग्यत्वात् । श्रीमानित्येवमादीनां पौनःपुन्यं सकलैश्वर्यादिमत्त्वबोधनार्थम् । धाता पितेव सर्वप्रजाधारणपोषणसामर्थ्ययुक्तः । रिपुनिषूदन आश्रितजनरिपुनाशकः कामादिरिपुनाशकश्च । अन्यथा जगद्गुरोर्भगवतो रिपोरेवाभावेनैतद्विशेषणासंगतिः स्यात् । बाहुलकात्कर्त्तरि ल्युट् । जीवलोकस्य प्राणिसमूहस्य सकलव्यवहारप्रवर्तकत्वेन रक्षिता । धर्मस्य तत्तद्वर्णाश्रमधर्मस्य मर्यादापरिपालनद्वारा रक्षिता ॥१३॥

रक्षिता स्वस्य धर्मस्य स्वजनस्य च रक्षिता ।
वेदवेदाङ्गतत्त्वज्ञो धनुर्वेदे च निष्ठितः ॥ १४ ॥

❀ अभिनव-राजलक्ष्मीः ❀

[ अन्वयः ] स्वस्य धर्मस्य रक्षिता, स्वजनस्य च रक्षिता, वेदवेदाङ्गतत्त्वज्ञः, धनुर्वेदे च निष्ठितः—।

[ विग्रहः ] स्वश्चासौ जनश्च—स्वजनः, तस्य। वेदस्याङ्गानि—वेदाङ्गानि[1], वेदाश्च वेदाङ्गानि च—वेदवेदाङ्गानि, तेषां तत्त्वं, तत् जानातीति—वेदवेदाङ्गतत्त्वज्ञः। धनुषो वेदः—धनुर्वेदः।

[ अर्थः ] स्वस्य = आत्मनः क्षत्रियस्य सम्बन्धिनः, धर्मस्य = प्रजापालनादेः, रक्षिता = सादरं निर्वाहकः, स्वजनस्य च = स्वभक्तजनस्य च, रक्षिता = परिपालयिता। वेदवेदाङ्गतत्त्वज्ञः = साङ्गवेदरहस्यवित्, धनुर्वेदे च = शस्त्रास्त्रशास्त्रेषु च, निष्ठितः = कुशलः [ 'रामो नाम जनैः श्रुतः' इति सम्बन्धः। ]

[ भाषा ] भगवान् रामचन्द्र अपने भक्तों के तथा धर्मके पूर्णरक्षक हैं, वेद वेदाङ्ग और अस्त्र विद्या के पारङ्गत हैं ॥ १४ ॥

❀ तिलकः ❀

रक्षितेति—स्वस्य धर्मस्य यज्ञाध्ययनदानदण्डयुद्धादिरूपस्य, रक्षिता= सादरमनुष्ठाता। स्वजनस्य = स्वभक्तजनस्यावश्यंभाविनोऽप्यनिष्टस्य निरासपूर्वकं परमेष्टमोक्षदानेन—रक्षिता। तच्चाम्बरीषप्रह्लादध्रुवादीनां रक्षणेन प्रसिद्धमेव। वेदानाम् = ऋग्यजुःसामाथर्वणां, छन्दःकल्पव्याकरणज्योतिषनिरुक्तशिक्षारूपवेदाङ्गानां च—तत्त्वज्ञः = पाठतोऽर्थतश्च ज्ञाता। शस्त्रास्त्रादिप्रतिपादकं शास्त्रं—धनुर्वेदस्तस्मिन्निष्ठितः = सम्यक्तज्ज्ञाता ॥ १४ ॥

**सर्वशास्त्रार्थतत्त्वज्ञः स्मृतिमान् प्रतिभानवान्।**
**सर्वलोकप्रियः साधुरदीनात्मा विचक्षणः ॥ १५ ॥**

---

१ "शिक्षा कल्पो व्याकरणं निरुक्तं ज्योतिषां गतिः।
छन्दोविचितिरित्येतैः षडंगो वेद उच्यते"।
"ऋग्वेदोऽथ यजुर्वेदः सामवेदो ह्यथर्वणः" वेदाश्चत्वार आख्याताः—"।

❀ अभिनव-राजलक्ष्मीः ❀

[ अन्वयः ] सर्वशास्त्रार्थतत्त्वज्ञः स्मृतिमान् प्रतिभानवान् सर्वलोकप्रियः साधुः अदीनात्मा विचक्षणः— ।

[ विग्रहः ] सर्वाणि शास्त्राणि–सर्वशास्त्राणि, तेषामर्थः— सर्वशास्त्रार्थः, तस्य तत्त्वं जानातीति–सर्वशास्त्रार्थतत्त्वज्ञः । स्मृतिरस्त्यस्य-स्मृतिमान् । प्रतिभानमस्यास्तीति–प्रतिभानवान् । सर्वे च ते लोकाश्च–सर्वलोकाः, तेषां प्रियः–सर्वलोकप्रियः । न दीनः– अदीन आत्मा यस्यासौ–अदीनात्मा । विचष्टे इति—विचक्षणः ।

**[ अर्थः ] सर्वशास्त्रार्थतत्त्वज्ञः = साङ्ख्ययोगादिसर्वशास्त्रसारवित्, स्मृतिमान् = अधीतसकलशास्त्रस्मरणशीलः, प्रतिभानवान् = अधीतानधीतार्थस्फूर्त्तिमान् , सर्वलोकप्रियः = सर्वजनप्रियः, "लोकस्तु भुवने जने" इति विश्वः । साधुः = सज्जनः—सौम्यो वा, "साधुस्त्रिषूचिते सौम्ये सज्जने वार्धुषावपि"—इति वैजयन्ती । अदीनात्मा = गम्भीराशयः—अकृपणश्च, विचक्षणः = व्याख्याता, वाक्पटुः, व्यवहारकुशलश्च ।**

[ भाषा ] श्री रघुनाथजी सब शास्त्रों के ज्ञाता, स्मरणशील, प्रतिभाशाली, सर्वप्रिय, परोपकारी, गम्भीर और व्यवहारकुशल हैं ॥१५॥

❀ तिलकः ❀

**सर्वेति**—साङ्ख्ययोगतर्कपूर्वोत्तरमीमांसासूत्राणि सव्याख्यानानि– शास्त्राणि, स्मृतय उपस्मृतयश्च तत्त्वार्थशासकत्वाच्छास्त्रम्, सर्वमूलशब्दशासकत्वाद्व्याकरणं च शास्त्रम्, तथैव कामन्दकादीन्यपि नीतिशास्त्राणि, सर्वेषामेषामर्थतत्त्वज्ञः । स्मृतिमान्–उक्ताधीतवेदशास्त्रार्थविस्मरणरहितः । प्रतिभानवान्=व्यवहारकाले श्रुतस्याश्रुतस्य चोचितार्थस्य शीघ्रं प्रतिभासः–प्रतिभानं, तद्वान् । तदुक्तम्—'प्रज्ञां नवनवोन्मेषशालिनीं प्रतिभां विदुः' इति । सर्वलोकप्रियः=द्रष्टृस्मर्तृलोकानामिहामुत्र हितावहः । साधुः = मृदुमधुर-

स्वभावः। अदीनात्मा = सहजासाधारणक्षात्रभावेनादीनस्वभावः, अतिव्यसनपरम्परायामप्यक्षुभितान्तःकरणो वा। विचक्षणः = यथोचितलौकिकसर्वक्रियासु कुशलः ॥ १५ ॥

सर्वदाभिगतः सद्भिः समुद्र इव सिन्धुभिः।
आर्यः सर्वसमश्चैव सदैव प्रियदर्शनः ॥ १६ ॥

❀ अभिनव-राजलक्ष्मीः ❀

[ अन्वयः ] समुद्रः सिन्धुभिरिव—सर्वदा सद्भिः अभिगतः, आर्यः, सर्वसमश्चैव, सदैव प्रियदर्शनः —।

[ विग्रहः ] सर्वेषु समः—सर्वसमः। प्रियं दर्शनं यस्यासौ—प्रियदर्शनः।

[ अर्थः ] समुद्रः = सरित्पतिः, "समुद्रोऽब्धिरकूपारः पारावारः सरित्पति"रित्यमरः। सिन्धुभिरिव = नदीभिरिव, सद्भिः = सत्पुरुषैः—वसिष्ठादिभिः, भक्तैश्च, सर्वदा = नित्यम्, उचिते सर्वस्मिन् काले वा, अभिगतः = युक्तः। आर्यः = सर्वपूज्यः, "आर्यः पूज्यः कुलीनोऽस्त्री"ति कोशः। सर्वसमः = शत्रुमित्रोदासीनेष्वपि सम एव, = सर्वदैव—प्रियदर्शनः = मधुरदर्शनः। [रामो नाम जनैः श्रुतोऽस्तीति योजना] ॥ १६ ॥

[ भाषा ] श्री रघुनाथजी-भक्तों से सदा युक्त रहते हैं, (जैसे नदियों से समुद्र।) और बड़े सज्जन, सबके प्रिय, और नित्य सुख स्वरूप हैं ॥१६॥

❀ तिलकः ❀

सर्वदेति—सर्वदा = होमदेवपूजासभाधिष्ठानकालेषु, तत्तत्कालोचितैः सद्भिः = सात्विकस्वभावैः-पुरोहितद्विजमन्त्रिप्रधानादिभिः, सिन्धुभिर्नदीभिः समुद्र इव-अभिगतः = सेवितः। यद्वा सद्भिर्भक्तैः सदा सेवितः। भगवत्सेवायां कालनियमाभावात्। दृष्टान्तेन—तं प्राप्तानां सतां भक्तानां—तेन सहैक्यं

ध्वनयति । आर्यः=सर्वपूज्यः । सर्वेषु—सुखदुःखोदर्केषु—समः=हर्षविषाद-रहितः, शत्रुमित्रोदासीनेषु वैषम्यरहितः । "तत्तत्कार्यानुरूपकफलदातेत्यर्थ" इत्यन्ये । सदैव=सर्वावस्थासु मुहुर्मुहुरनुभवेऽप्यननुभूतपूर्ववद्विस्मयनीय-दर्शनः ॥१६॥

**स च सर्वगुणोपेतः कौसल्यानन्दवर्धनः ।**
**समुद्र इव गाम्भीर्ये धैर्येण हिमवानिव ॥ १७ ॥**

❀ अभिनव-राजलक्ष्मीः ❀

[ अन्वयः ] स च सर्वगुणोपेतः कौसल्यानन्दवर्धनः गाम्भीर्ये समुद्र इव, धैर्येण हिमवानिव— [—अस्तीति शेषः ] ।

[ विग्रहः ] सर्वे च ते गुणाश्च—सर्वगुणाः, सर्वगुणैरुपेतः—सर्वगुणोपेतः । आनन्दं वर्धयतीत्यानन्दवर्धनः, कोसलस्यापत्यं स्त्री-कौसल्या, कौसल्याया आनन्दवर्धनः—कौसल्यानन्दवर्धनः । गम्भीरस्य भावः—गाम्भीर्यं, तस्मिन्—गाम्भीर्ये । धीरस्य भावः, धैर्यं, तेन—धैर्येण ।

[ अर्थः ] स च = रामश्च, सर्वगुणोपेतः = सकलगुणगणा-लङ्कृतः, कौसल्यानन्दवर्धनः = कौसल्यासुखदः, गाम्भीर्ये = गम्भीरतायां, समुद्र इव = सागर इव, [ -अस्ति ] धैर्येण = धीरतया, हिमवानिव = हिमालय इव,—अस्ति ।

[भावः] समुद्र इवाक्षोभ्यः, हिमालय इवाकम्प्यो रामोऽस्ति ।

[ भाषा ] सर्वगुण सम्पन्न कौसल्या के पुत्र भगवान् रामचन्द्र समुद्र की तरह गम्भीर, और हिमालय की तरह अचल हैं ॥१७॥

❀ तिलकः ❀

स चेति—स रामः सर्वैर्गुणैर्युक्तः—उक्तैर्वक्ष्यमाणैश्च । कौसल्यानन्द-वर्धनत्वेन—महाकुलप्रसूतत्व-प्रधानमहिषीपुत्रत्वादिरूपस्याभिषेकोचितधर्मस्य सत्ता दर्शिता । गाम्भीर्यम्=अगाधाशयत्वं, तत्र समुद्रतुल्यः । धैर्यं=मनसाप्य-

घृष्यत्वम्, इष्टवियोगादावनभिभूतचित्तत्वं च, रणेऽचलतया सहायाभावेऽपि स्थितिश्च, तेन हिमवत्सदृशः ॥ १७ ॥

**विष्णुना सदृशो वीर्ये सोमवत् प्रियदर्शनः ।**
**कालाग्निसदृशः क्रोधे क्षमया पृथिवीसमः ॥ १८ ॥**

❀ अभिनव-राजलक्ष्मीः ❀

[ अन्वयः ] वीर्ये विष्णुना सदृशः, सोमवत् प्रियदर्शनः, क्रोधे कालाग्निसदृशः, क्षमया पृथिवीसमः [—रामोऽस्ति]।

[ विग्रहः ] सोम इव—सोमवत्। प्रियं दर्शनं यस्यासौ—प्रियदर्शनः। कालस्य [काले वा] अग्निः—कालाग्निः, तेन सदृशः—कालाग्निसदृशः। पृथिव्या समः—पृथिवीसमः।

[ अर्थः ] [स रामश्च—]वीर्ये = "पराक्रमे, "वीर्यं बले प्रभावे च"त्यमरः। विष्णुना = नारायणेन, सदृशः = तुल्यः, सोमवत् = चन्द्र इव, प्रियदर्शनः = लोचनसुखदः, क्रोधे = कोपे, कालाग्निसदृशः = प्रलयानलसमः, क्षमया = तितिक्षया, "शान्तिः क्षमा तितिक्षा चे"त्यमरः। पृथिवीसमः = धरणीसदृशः, अस्तीति शेषः।

[ भावः ] पराक्रमो सकलानन्ददः क्षमाशीलः शत्रुकक्ष-कालानलो रामो लोके प्रसिद्धोऽस्ति।

[ भाषा ] रामचन्द्र-पराक्रम में विष्णु की तरह, सुन्दरता में चन्द्र की तरह, क्रोध में प्रलय की अग्नि की तरह, और क्षमा में पृथिवी की तरह हैं ॥१८॥

❀ तिलकः ❀

विष्णुनेति—यद्यपि रामो विष्णुरेव सर्वरूपश्च तथापि मानुषोपाधिभेदात्सर्वत्र सादृश्यं द्रष्टव्यम्। यद्वा—विष्णुना सदृश इत्यनन्वयालङ्कारः। चन्द्रवत्प्रजाव्यवहारनिरीक्षणकाले सौम्यदर्शनः। क्रोधे—युद्धकालिके—काला-

भिसदृशः । परैरधृष्य इति यावत् । क्षमा = प्रतीकारसामर्थ्येऽप्यपकार-सहिष्णुता, तया—पृथिवीतुल्यः ॥ १८ ॥

**धनदेन समस्त्यागे सत्ये धर्म इवापरः ॥१८½॥**

❀ अभिनव-राजलक्ष्मीः ❀

[ अन्वयः ] त्यागे धनदेन समः, सत्ये अपरः धर्म इव ।

[ विग्रहः ] धनं ददातीति धनदः ।

[ अर्थः ] त्यागे = दाने, धनदेन = कुबेरेण, समः = तुल्यः । सत्ये = सत्यभाषणादौ, अपरः = द्वितीयः, धर्म इव = धर्मराज इव [ रामो नाम जनैः श्रुतोऽस्तीति शेषः ] ।

[ भाषा ] धर्म स्वरूप रामजी दान देने में कुबेर ही थे ॥१८½॥

**तमेवं गुणसम्पन्नं रामं सत्यपराक्रमम् ॥ १९ ॥**
**ज्येष्ठं ज्येष्ठगुणैर्युक्तं प्रियं दशरथः सुतम् ।**
**प्रकृतीनां हितैर्युक्तं प्रकृतिप्रियकाम्यया ॥ २० ॥**
**यौवराज्येन संयोक्तुमैच्छत्प्रीत्या महीपतिः ।**

[ अन्वयः ] महीपतिः दशरथः एवंगुणसम्पन्नं सत्यपराक्रमं ज्येष्ठं ज्येष्ठगुणैः युक्तं प्रकृतीनां हितैः युक्तं प्रियं सुतं तं रामं प्रकृतिहितकाम्यया प्रीत्या यौवराज्येन संयोक्तुमैच्छत् ।

[ विग्रहः ] गुणैः सम्पन्नः–गुणसम्पन्नः, तं–। सत्यः पराक्रमो यस्यासौ–सत्यपराक्रमः, तं–। ज्येष्ठाश्च ते गुणाश्च–ज्येष्ठगुणाः, तैः– । दशसु दिक्षु रथो यस्यासौ–दशरथः । युवा चासौ राजा च युवराजः, तस्य भावः यौवराज्यं तेन–। प्रकृतीनां [1]प्रियकाम्या–प्रकृतिप्रिय-काम्या, तया—प्रकृतिप्रियकाम्यया

[ अर्थः ] महीपतिः = भूपतिः, दशरथः = राजा दशरथः,

---

[1] प्रियस्य इच्छा–प्रियकाम्या, आर्षः काम्याजिति—गोविन्दराजः ।

एवंगुणसम्पन्नं = सर्वगुणसम्पन्नं, सत्यपराक्रमम् = अमोघवीर्यं, ज्येष्ठं = प्रथमं, ज्येष्ठगुणैः = श्रेष्ठैर्गुणैः, युक्तं = संयुतं, प्रकृतीनां = प्रजानां, हितैर्युक्तं = कल्याणकारिणं, प्रियं = स्नेहास्पदं, सुतं = पुत्रं, तं = पूर्वोक्तगुणैरलङ्कृतं, रामं = श्रीरामचन्द्रं, प्रकृतिप्रियकाम्यया = लोकहितेच्छया, "प्रकृतिः पञ्चभूतेषु स्वभावे मूलकारणे, छन्दःकारणगुह्येषु जन्मामात्यादिमातृषु" इति वैजयन्ती । प्रीत्या = प्रमोदेन, यौवराज्येन संयोक्तुमैच्छत् = युवराजं कर्त्तुमियेष । [वाच्यप०] संयोक्तुमैष्यत दशरथेन रामः ।

[ भाषा ] राजा दशरथ नें सर्वगुण सम्पन्न प्रजाप्रिय श्रीरामचन्द्रजी को युवराज बनाना चाहा ॥१९।२०।२०½॥

❀ तिलकः ❀

धनदेनेति—त्यागे=धनत्यागे धर्मार्थं धनव्ययविषयेऽपेक्षितधनसंपत्तौ धनदेन = नवनिधीशेन, समः । अस्मिन्नेवांश उपमा, न तु त्यागांशे । तस्य धनसंग्रह एव प्रवृत्तेः । धनदव्यवहारस्तु कतिपयत्रिदशेभ्यो भगवदाज्ञया कतिपयधनदानमात्रादिति बहवः । सत्ये = सत्यवचनेऽपरो धर्म इव = धर्मस्य मूर्त्यन्तरमिवेत्युत्प्रेक्षा । एतदन्तं—बालकाण्डीयार्थसंग्रहः ।

'तमेवम्'—इत्यादिनाऽयोध्याकांडीयार्थसंग्रह आरभ्यते । 'तत्रेक्ष्वाकुवंशप्रभव' इत्यनेन भगवदाविर्भावः सूचितः । 'महावीर्यः-शत्रुनिबर्हण' इत्यनेन विश्वामित्रानुग्रहजशस्त्रास्त्रसंपत्तिताटकावधादि सूचितम् । 'लक्ष्मीवा'नित्यनेन सीतापरिणयः सूचितः, 'सत्यपराक्रम'मित्यनेन भार्गवलोकप्रतिबन्धादि सूचितम् । एवंगुणसंपन्नं = प्रागुक्तरीत्या सकलकल्याणगुणयुक्तम् । सत्यपराक्रमम् = अमोघपराक्रमम्—॥ १९ ॥

ज्येष्ठमिति—ज्येष्ठगुणैर्यौवराज्याभिषेकार्हगुणैर्युक्तम् । प्रकृतीनां = प्रजानां हितैरिहामुत्र हितावहैर्युक्तम्, ज्येष्ठं सुतं = रामम् । प्रकृतिप्रियकाम्यया = प्रकृतीनां प्रियं कर्तुमिच्छया । 'छान्दसः काम्यच्' इति

प्राज्ञः । प्रकृतिसंबन्धेनात्मनः प्रियं कर्तुमिच्छया । युवराजेन हि प्रजाकृत्ये संपादिते सति व्यवहारादिनिरीक्षणजन्यश्रमनिवृत्तिरूपं प्रियं स्वस्य भवतीति—वयम् ॥ २० ॥

**तस्याभिषेकसम्भारान् दृष्ट्वा भार्याथ कैकयी ॥ २१ ॥**
**पूर्वं दत्तवरा देवी वरमेनमयाचत ।**
**विवासनं च रामस्य भरतस्याभिषेचनम् ॥ २२ ॥**

ॐ अभिनव-राजलक्ष्मीः ॐ

[ अन्वयः ] अथ पूर्वं दत्तवरा भार्या देवी कैकयी—तस्य अभिषेकसम्भारान् दृष्ट्वा-रामस्य विवासनं भरतस्याभिषेचनञ्च वरम् एनम् अयाचत ।

[ विग्रहः ] दत्तौ वरौ यस्यै—सा—दत्तवरा । अभिषेकस्य संभाराः—अभिषेकसम्भाराः, तान्—अभिषेकसम्भारान् ।

[ अर्थः ] अथ = तदनन्तरं, पूर्वं = कदाचित्, दत्तवरा = प्रतिश्रुतवरद्वया, भार्या = पत्नी, देवी कैकयी = राज्ञी कैकयी, तस्य = रामस्य, अभिषेकसम्भारान् = अभिषेकोपकरणसामग्रीः, दृष्ट्वा = अवलोक्य, श्रुत्वा वा, रामस्य = रामभद्रस्य, विवासनं = निष्कासनं, "निष्कासनं निर्गमनं निष्क्रमणं विवासन"मिति कोशः । भरतस्य = स्वपुत्रस्य भरताख्यस्य, अभिषेचनं = यौवराज्याभिषेकरूपश्च, "अभिषेकोऽभिषेचन"मिति कोशः । वरम् = वरद्वयम्, एनं = दशरथम्, अयाचत = याचितवती ।

[ वाच्यप० ] दशरथो वरमयाच्यत ।

[ भाषा ] रामजी का अभिषेक सुन कैकयी ने राजा दशरथ से "रामचन्द्र का वनवास, भरत को राज्य" ये दो वरदान मांगे ॥२१।२२॥

❀ तिलकः ❀

**यौवराज्येनेति**—युवराजस्य भावो—यौवराज्यम् । पितरि राज्यं कुर्वत्येव सर्वराजव्यापारेऽभिषेकपूर्वकमधिकृतः पुत्रो—युवराजः । संयोक्तुं = योजयितुम् । महीपतिर्दशरथः ऐच्छत् । अथ तस्य रामस्य यौवराज्याभिषेकेऽपेक्षितान्संभारान् "औदम्बर्या सन्दी तस्यै प्रादेशमात्राः पादाः स्युः" इत्यादिना बह्वृचब्राह्मणेनोपदिश्यमानान्दधिमधुसर्पिरादीन्संभृतान्दृष्ट्वा=मन्थरावचनाज्ज्ञात्वा । कैकयी = राज्ञः कनीयसी भार्या । अत्र कैकेयीत्येव यद्यपि केकयशब्दादञि "केकयमित्रयु—" इत्यादिना यादेरियादेशे गुणे आदिवृद्धौ ङीपि "यस्येति च" इति लोपे साधु, तथापि 'अपि माषं मषं कुर्याच्छन्दोभङ्गं न कारयेत्' इतिन्यायेन कैकयीति प्रयोगः । पुंयोगलक्षणे ङीषि 'केकयी' इति पाठ इत्यन्ये ॥ २१ ॥ पूर्वं = पूर्वस्मिन्काले इन्द्रसहायार्थं प्रवृत्तदशरथस्य दैत्यैर्युद्धकाले दशरथेतरप्रयुक्तामासुरीं मायां धवलाङ्गमुनिदत्तविद्यया निवारयिष्यै कैकय्यै तुष्टेन दशरथेन दत्तौ वरौ यस्यै सा । देवी—सेव, राज्याभिषेकसमये प्राप्ताभिषेका देवी—तद्वत्प्रियतमा, एनं = वक्ष्यमाणलक्षणं वरं प्राप्तकालत्वादयाचत, राजानम् । याचेर्द्विकर्मकत्वात् । वरद्वयमाह—रामस्य राज्यादुद्वासनम् , भरतस्य स्वपुत्रस्याभिषेचनम् ॥२२॥

**स सत्यवचनाद्राजा धर्मपाशेन संयतः ।**
**विवासयामास सुतं रामं दशरथः प्रियम् ॥ २३ ॥**

❀ अभिनव-राजलक्ष्मीः ❀

[ अन्वयः ] सत्यवचनात् धर्मपाशेन संयतः सः राजा दशरथः प्रियं सुतं रामं विवासयामास ।

[ विग्रहः ] सत्यं वचनं-सत्यवचनं, तस्मात् । धर्म एव पाशः-धर्मपाशः, तेन—।

[ अर्थः ] — सत्यवचनात् = सत्यभाषणव्रतमात्मनोऽवेक्ष्य,

[ ल्यब्लोपे पञ्चमी ] धर्मपाशेन = प्रतिज्ञापाशेन, संयतः = बद्धः, स राजा दशरथः = प्रसिद्धो राजा दशरथः, प्रियं = स्निग्धं, सुतं = पुत्रं, रामं = रामभद्रं, विवासयामास = राज्यान्निष्कासयति स्म ।

[भाषा] प्रतिज्ञाबद्ध सत्यभाषी दशरथजी ने रामजी को वन में भेजा॥२३॥

❀ तिलकः ❀

स इति—सत्यवचनात् = धर्मपरनिर्देशेन सत्यप्रतिज्ञत्वादित्यर्थः । अतो हेतोः सत्यरूपेण धर्मपाशेन, संयतो = बद्धः सन्दशरथः प्रियं सुतमपि विवासयामास ॥ २३ ॥

स जगाम वनं वीरः प्रतिज्ञामनुपालयन् ।
पितुर्वचननिर्देशात् कैकय्या प्रियकारणात् ॥ २४ ॥

❀ अभिनव-राजलक्ष्मीः ❀

[ अन्वयः ] वीरः सः कैकय्याः प्रियकारणात् , पितुः वचननिर्देशात् प्रतिज्ञाम् अनुपालयन् वनं जगाम ।

[ विग्रहः ] वचनस्य निर्देशो वचननिर्देशः, तस्मात्—।

[ अर्थः ] वीरः = पराक्रमी सः = श्रीरामभद्रः, केकय्याः प्रियकारणात् = कैकेयीसुखजनकात्, पितुः वचननिर्देशात् = तातपादानामादेशात्, "आज्ञायामपि निर्देश" इति बाणः । प्रतिज्ञां = संविदं, "संविदागूः प्रतिज्ञान"मित्यमरः । वनं = काननं, "गहनं काननं वन" मित्यमरः । जगाम = ययौ ।

[ वाच्यपः ] तेन वनं जग्मे ।

[ भाषा ] केकयी को खुश करने के लिए दी गई पिता की आज्ञा को मान रामजी वन को पधारे ॥२४॥

❀ तिलकः ❀

स इति—वीरोऽनेकैरपराङ्मुखतया योद्धापि स—रामः पितुः प्रतिज्ञां

सत्यतया स्वविवासनेनानुपालयन्। यद्वा कैकेयीसंनिधौ पितृवचनपरिपालन-विषयां स्वकृतां प्रतिज्ञां परिपालयन्पितृवचनकृतान्निर्देशात्=आज्ञातो मातुश्च कैकेय्याः प्रियकारणात्=प्रियसिद्धिनिमित्तं वनं जगाम। अनेन पितृतत्पत्नी-संतोषकरणमेव सर्वात्मना पुत्रस्य धर्म इति भगवतोपदिष्टम् ॥२४॥

**तं व्रजन्तं प्रियो भ्राता लक्ष्मणोऽनुजगाम ह।**
**स्नेहाद्विनयसम्पन्नः सुमित्रानन्दवर्द्धनः ॥ २५ ॥**
**भ्रातरं दयितो भ्रातुः सौभ्रात्रमनुदर्शयन्।**

❀ अभिनव-राजलक्ष्मीः ❀

[ अन्वयः ] व्रजन्तं तं भ्रातरं सौभ्रात्रम् अनुदर्शयन्—भ्रातुः दयितः प्रियः विनयसम्पन्नः सुमित्रानन्दवर्धनः भ्राता लक्ष्मणः स्नेहाद् अनुजगाम ह।

[ विग्रहः ] विनयेन सम्पन्नः-विनयसम्पन्नः। आनन्दं वर्धयति—आनन्दवर्धनः, सुमित्राया आनन्दवर्धनः—सुमित्रानन्द-वर्धनः, सुभ्रातुर्भावः-सौभ्रात्रं, तत्—।

[ अर्थः ] व्रजन्तं = गच्छन्तं, तं भ्रातरं = भ्रातरं रामं, सौभ्रात्रं = सुभ्रातृत्वम्, स्नेहमिति यावत्। अनुदर्शयन्, भ्रातुः= रामस्य, दायतः = प्रियः, "दयितं वल्लभं प्रिये" इत्यमरः। प्रियः = रामस्नेहाविष्टचेताः, विनयसम्पन्नः = विनीतः, सुमित्रा-नन्दवर्धनः = सुमित्रापुत्रः, भ्राता=रामभ्राता, लक्ष्मणः=सौमित्रिः, स्नेहात् = प्रणयेन, अनुजगाम ह = अनुगच्छति स्म।

[ वाच्ययः ] लक्ष्मणेन सोऽनुजग्मे।

[ भाषा ] रामचन्द्रजी के साथ लक्ष्मणजी भी वन को गए ॥२५½॥

❀ तिलकः ❀

तमिति—व्रजन्तं भ्रातरम्। प्रियो = रामे सहजप्रीतिमान् ॥ २५ ॥

रामस्य दयिता भार्या नित्यं प्राणसमा हिता ॥ २६ ॥
जनकस्य कुले जाता देवमायेव निर्मिता ।
सर्वलक्षणसम्पन्ना नारीणामुत्तमा वधूः ॥ २७ ॥
सीताप्यनुगता रामं शशिनं रोहिणी यथा ।

❀ अभिनव-राजलक्ष्मीः ❀

[ अन्वयः ] रामस्य दयिता भार्या,–नित्यं-प्राणसमा हिता,–जनकस्य कुले जाता,—देवमाया इव निर्मिता,–सर्वलक्षणसम्पन्ना, नारीणाम् उत्तमा वधूः—सीता अपि–शशिनं रोहिणी यथा—रामम् अनुगता ।

[ विग्रहः ] प्राणैः समा-प्राणसमा । देवानां माया देवमाया । सर्वाणि तानि लक्षणानि–सर्वलक्षणानि, तैः सम्पन्ना–सर्वलक्षण-सम्पन्ना ।

[ अर्थः ] रामस्य = रामभद्रस्य, दयिता = प्रिया, भार्या = जाया, "भार्या जाया ऽथ पुं भूम्नि दाराः स्यात्" इत्यमरः । नित्यं = सर्वदा, प्राणसमा = प्राणतुल्या, हिता = हितकारिणी, जनकस्य = विदेहस्य राज्ञः, कुले = वंशे, जाता = उत्पन्ना, देव-मायेव = सुरमायेव साक्षात्, निर्मिता = आविर्भूता, सर्वलक्षण-सम्पन्ना = सर्वसौभाग्यलक्षणान्विता, नारीणां = सुन्दरीणां, उत्तमा = श्रेष्ठा, वधूः = सीमन्तिनी, "नारी सीमन्तिनी वधू"—रित्यमरः । सीताऽपि = जानकी–अपि, शशिनं = चन्द्रमसं, रोहिणी यथा = रोहिणीव, रामम् = श्रीरामचन्द्रम्, अनुगता = अनुयाता ।

[ भाषा ] श्रीरामजी के साथ भगवती जानकी भी वन को गईं ॥२६।२७॥

❀ तिलकः ❀

**भ्रातरमिति**—भ्रातू रामस्य दयितः प्रियः । सौभ्रात्रं=सुभ्रातृभावम्, स्नेहमिति यावत् । स्नेहादेव जगाम । न पित्रादिनिर्देशादिति भावः । अथ रामस्य दयिता = इष्टा । प्राणसमा = निरतिशयप्रेमास्पदम् । हिता = नित्यं हितकारिणी ॥ २६ ॥

जनकस्य—कुले = अन्वये, जाता । यद्यप्येषाऽयोनिजा तथापि सीरध्वजस्य देवयजनलाङ्गलपद्धतावाविर्भूतत्वादेवमुक्तिः । अत एवाह—देवमायेवेति-सा-इवाचिन्त्योदयस्थितिलया । देवैरेव स्वकार्यसिद्ध्याकाङ्क्षिभिर्निर्मिताविर्भाविता । यद्वा इवशब्द एवार्थे । देवेन भगवताविर्भाविता स्वमायैव । भगवतोऽनाद्यन्ता सर्वकार्यसहायभूता सहजशक्तिरेव हि माया । यत्तु तिलोत्तमादिवद्देवमायेव स्थितेति, तन्न । निर्मितपदवैयर्थ्यापत्तेः । सर्वैः स्त्रीलक्षणैः संपन्ना = युक्ता ॥ २७ ॥

**पौरैरनुगतो दूरं पित्रा दशरथेन च ॥ २८ ॥**
**शृङ्गवेरपुरे सूतं गंगाकूले व्यसर्जयत् ।**
**गुहमासाद्य धर्मात्मा निषादाधिपतिं प्रियम् ॥ २९ ॥**

❀ अभिनव-राजलक्ष्मीः ❀

[ अन्वयः ] पौरैः पित्रा दशरथेन च दूरम् अनुगतः धर्मात्मा रामः—गङ्गाकूले शृङ्गवेरपुरे प्रियं निषादाधिपतिं गुहम् आसाद्य—सूतं व्यसर्जयत् ।

[ विग्रहः ] पुरे भवाः—पौराः, तैः । गङ्गायाः कूलं—गङ्गाकूलं, तस्मिन्—। धर्म आत्मा यस्य स—धर्मात्मा, निषादानाम् अधिपतिः—तम्— ।

[ **अर्थः** ] **पौरैः = अयोध्यावासिभिः, पित्रा = जनकेन, दशरथेन च = दशरथमहाराजेन च, दूरं = सुदूरम्, अनुगतः =**

अनुयातः, धर्मात्मा = धर्मप्राणः, रामः=श्रीरामभद्रः, शृङ्गवेरपुरे गङ्गाकूले = जाह्नवीतटे, "कूलं रोधश्च तीरञ्च प्रतीरञ्च तटं त्रिषु" इत्यमरः । निषादाधिपतिं = कैवर्त्तराजं, गुहं = गुहाख्यम्, आसाद्य = प्राप्य, सूतं = सारथिं सुमन्त्रं, "सूतः क्षत्ता च सारथिः"—इत्यमरः । व्यसर्जयत् = विससर्ज ।

[ वाच्य प० ] पौरैः पित्रानुयातेन रामेण सूतो व्यसर्जि ।

[भाषा] पुरवासियों को और दशरथ को लौटा शृङ्गवेरपुर (सिङ्गरौर) में आकर गङ्गा के किनारे गुहराज के यहाँ पहुँच सूत को लौटा दिया ॥२८।२९॥

❀ तिलकः ❀

सीतेति—सीता लाङ्गलपद्धतिस्तदुत्थत्वात्सीता । शशिनं रोहिणीव राममनुगता ॥ २८ ॥

शृङ्गेति—गङ्गाकूले वर्तमानशृङ्गवेरपुरे स्थितं निषादाधिपतिं प्रियमिष्टं गुहमासाद्य तत्सहितो लक्ष्मणादिसहितश्च रामः सूतं–रथेन स्वप्रापणार्थमागतं—गङ्गाकूले व्यसर्जयत्परावर्तितवान् ॥ २९ ॥

गुहेन सहितो रामो लक्ष्मणेन च सीतया ।
ते वनेन वनं गत्वा नदीस्तीर्त्वा बहूदकाः ॥ ३० ॥
चित्रकूटमनुप्राप्य भरद्वाजस्य शासनात् ।
रम्यमावसथं कृत्वा रममाणा वने त्रयः ॥ ३१ ॥
देवगन्धर्वसंकाशास्तत्र ते न्यवसन् सुखम् ।

❀ अभिनव-राजलक्ष्मीः ❀

[ अन्वयः ] गुहेन लक्ष्मणेन सीतया च सहितो रामः—ते वनेन वनं गत्त्वा बहूदकाः नदीः तीर्त्वा,—भारद्वाजस्य शासनात् चित्रकूटम् अनुप्राप्य तत्र वने रममाणाः देवगन्धर्वसङ्काशाः ते त्रयः रम्यम् आवसथं कृत्वा सुखं न्यवसन् ।

[ विग्रहः ] चित्राणि कूटानि यस्यासौ–चित्रकूटः, तम्–। देवाश्च गन्धर्वाश्च–देवगन्धर्वाः, तैः सङ्काशाः–देवगन्धर्वसङ्काशाः ।

[ अर्थः ] गुहेन = निषादाधिपतिना, लक्ष्मणेन = सौमित्रिणा, सीतया च = जानक्या च, सहितः = संयुतः, रामः = श्रीरामभद्रः, ते = इमे चत्वारः, वनेन वनं गत्वा = वनाद्वनान्तरं गत्वा, नाना वनानि व्यतिक्रम्येति यावत्, (तेवनेन = पादचारेण इति वा,–) बहूदकाः = धाराशतसमाकुलाः, नदीः = सरितः, गङ्गाम्, तीर्त्वा = उल्लङ्घ्य, [ गुहं निवर्त्य– ] भरद्वाजस्य=तन्नाम्नो महर्षेः, शासनात् = निदेशात्, चित्रकूटं = तन्नाम्ना प्रसिद्धं शैलं, अनुप्राप्य = आसाद्य, तत्र = चित्रकूटे, रममाणाः = सुखं विहरन्तः, देवगन्धर्वसङ्काशाः = देवगन्धर्वतुल्यपराक्रमाः, "निभसङ्काशनीकाशप्रतीकाशोपमादयः" इत्यमरः । ते = रामभद्रसीतासौमित्रयः, त्रयः = त्रयोऽपि, रम्यं = मनोहरम्, आवसथं = पर्णशालाम्, कृत्वा = विधाय, सुखं = सुखं यथास्यात्तथा, न्यवसन् = निवासं विदधुः ।

[ भाषा ] गुह की सहायता से गंगा को पार कर उसको लौटा दिया । और भरद्वाज के आश्रम में आ, उनकी आज्ञा से चित्रकूट में कुटी बना तीनों सीता, राम, लक्ष्मण सुख से रहने लगे ॥३०॥३१॥३१½॥

❀ तिलकः ❀

गुहेनेति—पूर्वार्धं पूर्वश्लोकान्वयि । अथ ते सीतारामलक्ष्मणा वनेन पुरोवर्तिप्राप्तवनद्वारेण, परम्=अपरं वनं गत्वा । तेवनं पादचारस्तेन वनं गत्वेत्यर्थ इति संप्रदायः ॥ ३० ॥ चित्रेति—अनु पश्चाद्भरद्वाजस्य शासनाच्चित्रकूटं प्राप्य तत्र रम्यमावसथं = पर्णशालां कृत्वा तत्र वने रममाणास्त्रयो देवगन्धर्वसदृशाः सुखं न्यवसन्नित्यन्वयः ॥ ३१ ॥

चित्रकूटं गते रामे पुत्रशोकातुरस्तदा ॥ ३२ ॥
राजा दशरथः स्वर्गं जगाम विलपन् सुतम् ।

❀ अभिनव-राजलक्ष्मीः ❀

[ अन्वयः ] रामे चित्रकूटं गते तदा पुत्रशोकातुरः राजा दशरथः सुतं विलपन् स्वर्गं जगाम ।

[ विग्रहः ] पुत्रस्य शोकः—पुत्रशोकः, तेन आतुरः— ।

[ अर्थः ] रामे = रामभद्रे, चित्रकूटं, तदाख्यं पर्वतं, गते = प्राप्ते सति,-तदा = तदानीं, पुत्रशोकातुरः = पुत्रविरहाकुलः, राजा दशरथः—सुतं=पुत्रं रामं, विपलन् = परिदेवमानः, स्वर्गं= परलोकं, जगाम = अगच्छत्। [ वाच्यप. ] स्वर्गो राज्ञा जग्मे ।

[ भाषा ] पुत्रशोक से राजा दशरथ स्वर्ग को गए ॥ ३२ ॥

❀ तिलकः ❀

ततः पुत्रशोकातुरोऽनिर्वाच्यपुत्रवियोगजन्यशोकपीडितः ॥ ३२ ॥

**गते तु तस्मिन् भरतो वसिष्ठप्रमुखैर्द्विजैः ॥ ३३ ॥**
**नियुज्यमानो राज्याय नैच्छद्राज्यं महाबलः ।**

❀ अभिनव-राजलक्ष्मीः ❀

[ अन्वयः ] तस्मिन् गते तु—वसिष्ठप्रमुखैः द्विजैः राज्याय नियुज्यमानः महाबलो भरतः राज्यं न ऐच्छत् ।

[ विग्रहः ] वसिष्ठः प्रमुखो येषान्ते—वसिष्ठप्रमुखाः, तैः । महद्बलं यस्यासौ महाबलः ।

[अर्थः] तस्मिन् = दशरथे, गते तु = दिवं गते च,—वसिष्ठ-प्रमुखैः = वसिष्ठादिभिः, द्विजैः = विप्रैः, "दन्तविप्राण्डजा द्विजाः" इत्यमरः । राज्याय = प्रजापालनकर्म कर्त्तुं, नियुज्यमानः = प्रेर्यमाणः, महाबलः = वीर्यवान्, भरतः—राज्यं = राज्याभिषेकं, नैच्छत् = न स्वीचकार। [ वाच्यप. ] भरतेन राज्यं नैष्यत ।

[भाषा] लोगों के कहने पर भी भरत ने राज्य स्वीकार नहीं किया ॥३३॥

❀ तिलकः ❀

राजेति—तस्मिन्दशरथे गते = लोकान्तरं गते-मृते वसिष्ठाद्यैर्द्विजैस्त्रै-वर्णिकैः । इदमुपलक्षणम्, तत्सहितैर्मन्त्रिवृद्धैरित्यपि बोध्यम् ॥ ३३ ॥

**स जगाम वनं वीरो रामपादप्रसादकः ॥ ३४ ॥**

❀ अभिनव-राजलक्ष्मीः ❀

[ अन्वयः ] रामपादप्रसादकः स वीरो वनं जगाम ।

[ विग्रहः ] रामस्य पादौ प्रसादयतीति—रामपादप्रसादकः ।

[ अर्थः ] रामपादप्रसादकः = पूज्यं रामं प्रसन्नं कर्त्तुं, सः = पूर्वोक्तः, वीरः = पराक्रमी भरतः, वनं जगाम = चित्रकूटं गतः ।

[ भाषा ] रामजी को मनाने भरतजी चित्रकूट गए ॥ ३४ ॥

❀ तिलकः ❀

राज्याय = राज्यं कर्तुं तैर्नियुज्यमानः = प्रेर्यमाणो महाबलः = समर्थोऽपि सौभ्रात्राद्राज्यं नैच्छत् । ततो रामपादप्रसादकः = पूज्यं रामं प्रसादयितुं वनं जगाम । पादशब्दः पूज्यवाची ॥ ३४ ॥

**गत्वा तु स महात्मानं रामं सत्यपराक्रमम् ।**
**अयाचद् भ्रातरं राममार्यभावपुरस्कृतः ॥ ३५ ॥**

❀ अभिनव-राजलक्ष्मीः ❀

[ अन्वयः ] स महात्मानं सत्यपराक्रमं भ्रातरं रामं गत्वा तु आर्यभावपुरस्कृतः अयाचत् ।

[ विग्रहः ] महान् आत्मा यस्यासौ । सत्यः पराक्रमो यस्य सः सत्यपराक्रमः। आर्यस्य भावः पुरस्कृतो येनासौ-आर्यभावपुरस्कृतः ।

[ अर्थः ] सः = भरतः, महात्मानं = महावैभवं, सत्यपराक्रमम् = अमोघवीर्यं, भ्रातरं = ज्येष्ठभ्रातरं रामं, गत्वा = प्राप्य,

आर्यभावपुरस्कृतः = विनीतवेषः सन्, अयाचत् = प्रार्थयाञ्चक्रे ।

[ वाच्यप० ] तेन रामोऽयाच्यत ।

[ भाषा ] भरतजी ने वापिस चलने की रामजी से प्रार्थना की ॥ ३५ ॥

ॐ तिलकः ॐ

गत्वेति—स भरतो महात्मानं सत्यप्रतिज्ञत्वादिधर्मैर्महावैभवं भ्रातरं रामं गत्वार्यभावपुरस्कृतो=विनीतवेषस्तं रामं राज्याय प्रतिनिवृत्तिमयाचत् । याचिर्द्विकर्मकः ॥ ३५ ॥

**'त्वमेव राजा धर्मज्ञ' इति रामं वचोऽब्रवीत् ।**
**रामोऽपि परमोदारः सुमुखः सुमहायशाः ॥ ३६ ॥**

ॐ अभिनव-राजलक्ष्मीः ॐ

[ अन्वयः ] त्वमेव धर्मज्ञः राजा इति वचः अब्रवीत्, परमोदारः सुमुखः सुमहायशाः रामोऽपि [ "राज्यं नैच्छ" दित्यग्रिम-३७ श्लोकेनान्वयः ] ।

[ विग्रहः ] परमश्चासौ उदारश्च-परमोदारः, सुष्ठु मुखं यस्यासौ-सुमुखः । सुमहत् यशः यस्यासौ-सुमहायशाः ।

[ अर्थः ] त्वमेव = भवानेव, धर्मज्ञः = राजधर्मविशारदः, राजा = राजपदार्हः, इति = इत्येवं, वचः = वाक्यम्, अब्रवीत् = राममुवाच । परमोदारः = विशालहृदयः, उदारमूर्धन्यः, महायशाः = कीर्त्तिसम्पन्नः, रामोऽपि = रामभद्रोऽपि, [ राज्यं न स्वीचकारेत्यर्थः ] ।

[ भाषा ] पर रामजी ने वापिस जाना स्वीकार नहीं किया ॥ ३६ ॥

ॐ तिलकः ॐ

ननु पितृमातृदत्तं राज्यं तवैव योग्यमिति मम प्रतिनिवृत्तिरनुचितेत्यत्राह—त्वमेवेति—सर्वगुणश्रेष्ठे ज्येष्ठे सति कनिष्ठो न राज्यार्ह इति

धर्मं त्वमेव जानासीति त्वमेव राजेति वचो राममब्रवीत्। रामोऽपि रमयतीतिव्युत्पत्त्याश्रितचित्तरञ्जकोऽपि पितुरादेशाद्राज्यं नैच्छदित्युत्तरेणान्वयः। अत्र हेतुगर्भं विशेषणम्—परमोदारः, स्वसुखसाधनस्य परस्मै दानमौदार्यं तद्युतः। सुमुखो राज्यादपि वनेऽम्लान्याद्यधिकमुखप्रसादयुक्तः। सुमहायशाः=प्रतिज्ञापालनरूपयशोभङ्गभिया नैच्छदिति कतककृतः। **तीर्थस्तु—** परमोदारो याचकाभीष्टप्रदाननिरतोऽर्थिलाभेन प्रसन्नमुखः। सुमहायशा अर्थ्यवैमुख्येन प्रसिद्धकीर्तिरपि पित्राज्ञयैव भरतवाक्यं नैच्छदित्याह ॥३६॥

**नचैच्छत् पितुरादेशाद्राज्यं रामो महाबलः।**
**पादुके चास्य राज्याय न्यासं दत्वा पुनः पुनः ॥३७॥**

❀ अभिनव·राजलक्ष्मीः ❀

[ अन्वयः ] महाबलः रामः पितुरादेशात् राज्यं न च ऐच्छत्। अस्य च राज्याय पादुके न्यासं दत्त्वा पुनः पुनः [—निवर्त्तयामासेत्यग्रिम ३८ श्लोकेनान्वयः ]

[ विग्रहः ] महद्बलं यस्यासौ—महाबलः।

[ अर्थः ] महाबलः = बलशाली·धीरः, रामः = श्रीरामभद्रः, पितुः = जनकस्य·दशरथस्य, आदेशात् = शासनं प्रतिनिर्दिश्य, संस्मार्येति यावत्, "आदेश उपदेशः स्या"दिति कोशः। राज्यं = प्रजापालनादिकर्म, नैच्छत् = नाङ्गीचकार। अस्य च = भरतस्य च, राज्याय=प्रजापालनादिकं कर्त्तुं, पादुके=काष्ठमयं पादत्राणयुगलं, "अथ पादुका, पादूरूपानत्" इत्यमरः। न्यासं दत्वा = स्वप्रतिनिधितया दत्वा, "पुमानुपनिधिर्न्यास" इत्यमरः। पुनः पुनः=बारम्बारं, [—निवर्त्तयामासेति वक्ष्यमाणेन सम्बन्धः ]

[ भाषा ] रामजी ने पिता की आज्ञा का स्मरण दिला भरत को समझा कर (अपनी खड़ाऊँ दे) लौटा दिया॥ ३७॥

❀ तिलकः ❀

ततोऽस्य भरतस्य राज्याय राज्यरक्षणसामर्थ्यं लब्धुमहल्यादौ दृष्टशक्तिकाचिन्त्यवैभवस्वपदस्पृष्टे पादुके न्यासरूपेण दत्त्वा पुनःपुनः प्रतिनिवृत्तिं याचमानं भरतं 'चतुर्दशसमानन्तरं सर्वथा प्रतिनिवर्तितव्य'मित्यभ्युपेत्य निवर्तयामास । अस्येति राज्यापेक्षया षष्ठी । दत्त्वेत्यत्र अस्मै इत्यर्थंलभ्यम् । दत्त्वेत्यन्वयेऽपि संप्रदानस्य शेषत्वविवक्षया षष्ठीत्यन्ये । यत्तु निक्षेपे मुख्यदानाभावान्न चतुर्थी दत्त्वेत्यन्वयेऽपीति, तन्न । 'खडिकोपाध्यायस्तस्मै चेपटां ददाती'ति महाभाष्यप्रयोगविरोधात् ॥ ३७ ॥

निवर्तयामास ततो भरतं भरताग्रजः ।
स काममनवाप्यैव रामपादावुपस्पृशन् ॥ ३८ ॥

❀ अभिनव-राजलक्ष्मीः ❀

[ अन्वयः ] ततः भरतं निवर्त्तयामास, सः कामम् अनवाप्यैव रामपादौ उपस्पृशन्— ।

[ विग्रहः ] भरतस्याग्रजः-भरताग्रजः । रामस्य पादौ— ।

[ अर्थः ] ततः = पादुकादानानन्तरं, भरताग्रजः = रामः, भरतं = स्वानुजं भरतं, निवर्त्तयामास = परावर्त्तयति स्म । सः= भरतोऽपि, कामम्=अभिलाषं "कामोऽभिलाषस्तर्षश्चे"त्यमरः । रामपादौ = रामभद्रचरणौ, उपस्पृशन् = नमस्कुर्वन्, ['प्रति निवृत्त' इति शेषः ।] [वा. प.] भरताग्रजेन भरतो निवर्त्तयाञ्चक्रे ।

[ भाषा ] रामजी की आज्ञा मान, भरतजी प्रणाम कर लौटे ॥३८॥

❀ तिलकः ❀

स भरतो रामप्रतिनिवृत्तिरूपं काममनवाप्यैव रामपादौ नमस्कुर्वन्— प्रतिनिवृत्त इति शेषः ॥ ३८ ॥

नन्दिग्रामेऽकरोद्राज्यं रामागमनकांक्षया ।
गते तु भरते श्रीमान् सत्यसन्धो जितेन्द्रियः ॥ ३९ ॥

❀ अभिनव-राजलक्ष्मीः ❀

[ अन्वयः ] रामागमनकाङ्क्षया नन्दिग्रामे राज्यम् अकरोत्। भरते गते तु श्रीमान्—सत्यसन्धः जितेन्द्रियः [ 'रामः दण्डकान् प्रविवेशे'त्यग्रिम ४० श्लोकेनान्वयः ]।

[ विग्रहः ] रामस्यागमनं—रामागमनं, तस्य आकाङ्क्षा—तया। सत्या सन्धा यस्यासौ—सत्यसन्धः, जितानीन्द्रियाणि येनासौ।

[ अर्थः ] रामागमनकाङ्क्षया = रामागमनेच्छया "इच्छा काङ्क्षा स्पृहेहा तृडि"त्यमरः। 'सः=भरतः' इति पूर्वश्लोकेनानुषज्यते, नन्दिग्रामे—राज्यं = प्रजारक्षणम्, अकरोत् = चकार। भरते = केकयीपुत्रे, गते तु = प्रस्थिते च सति,-श्रीमान् = शोभान्वितः, सत्यसन्धः = सत्यप्रतिज्ञः, जितेन्द्रियः = विजितेन्द्रियवर्गः,-संयमी,—[ रामो दण्डकारण्यं प्रविवेशेत्यर्थः ]।

[ वा. प. ] तेन राज्यमक्रियत।

[ भाषा ] भरतजी नन्दिग्राम में रह भगवान् की आज्ञा से प्रजापालन करने लगे। श्रीरामजी भी—[ दण्डकारण्य को चले गये ] ॥३९॥

❀ तिलकः ❀

ततो नमस्कृत्य प्रतिनिवृत्तो नन्दिग्रामे स्थित्वा रामश्चतुर्दशसमारूपप्रतिज्ञातसमयानन्तरं राज्यायागमिष्यतीति रामागमनकाङ्क्षया पादुके पुरस्कृत्य राज्यमकरोत्, उत्तरार्धं स्पष्टम् ॥ ३९ ॥

**रामस्तु पुनरालक्ष्य नागरस्य जनस्य च।**
**तत्रागमनमेकाग्रो दण्डकान् प्रविवेश ह ॥ ४० ॥**

❀ अभिनव-राजलक्ष्मीः ❀

[ अन्वयः ] रामः तु पुनः नागरस्य जनस्य च तत्र आगमनम् आलक्ष्य, एकाग्रः दण्डकान् प्रविवेश।

[ विग्रहः ] नगरे भवः—नागरः, तस्य । एकम् अग्रं यस्यासौ।

[ अर्थः ] रामस्तु = रामभद्रस्तु,—पुनः = भूयोऽपि, नागरस्य = पुरवासिलोकस्य, जनस्य च = ग्रामवासिलोकस्य च, तत्र = चित्रकूटे, आगमनं = गमनागमनम्, आलक्ष्य = विभाव्य, एकाग्रः = समाहितचेताः,—सज्जः सन्,—दण्डकान् = दण्डकवनं, प्रविवेशह = जगाम । [ वाच्यप. ] रामेण दण्डकाः प्रविविशिरे ।

[ भाषा ] चित्रकूट में लोगों की भीड़ होने की सम्भावना से रामचन्द्रजी चित्रकूट छोड़कर दण्डकवन को चले गए ॥ ४० ॥

❀ तिलकः ❀

राम इति—उक्तगुणविशिष्टो रामस्त्वत्यासन्नतया नागरस्य मन्त्रिवृद्धादिपौरजनस्य भरतस्य च तत्र चित्रकूट आगमनमालक्ष्य = संभाव्य तेषां प्रतिनिवर्तनप्रयासाद्दूरमितोऽपि दूरगमनमिति संचिन्त्य दण्डकान्दण्डकारण्यानि, अवान्तरबहुत्वाद्बहुवचनम् । तेषां रक्षश्चोरादिभूयिष्ठत्वादेकाग्रः = सज्जो भूत्वा, प्रविवेश । हेति प्रसिद्धौ ॥ ४० ॥

**प्रविश्य तु महारण्यं रामो राजीवलोचनः ।**
**विराधं राक्षसं हत्वा शरभङ्गं ददर्श ह ॥ ४१ ॥**

❀ अभिनव-राजलक्ष्मीः ❀

[ अन्वयः ] राजीवलोचनः रामः महारण्यं प्रविश्य तु विराधं राक्षसं हत्वा शरभङ्गं ददर्श ह ।

[ विग्रहः ] राजीवे इव लोचने यस्यासौ—राजीवलोचनः । महत् अरण्यं महारण्यं, तत् ।

[ अर्थः ] राजीवलोचनः = कमललोचनः, "बिसप्रसूनराजीवपुष्कराम्भोरुहाणि चे"त्यमरः । रामः = रामभद्रः, महारण्यं = महत्काननं दण्डकाख्यं, प्रविश्य तु = प्रविष्टमात्र एव,

विराधं = तदाख्यं, राक्षसं = निशाचरं, हत्वा = व्यापाद्य, शर-भङ्गं = तदाख्यं, मुनिं = महर्षिं । ददर्श ह = विलोकयति स्म ।

[ वा. प. ] रामेण शरभङ्गो ददृशे

[ भाषा ] श्री रामचन्द्रजी दण्डकारण्य में विराध' को मार शरभङ्ग के आश्रम में गए ॥ ४१ ॥

❀ तिलकः ❀

प्रविश्येति--महारण्यमित्यरण्यकाण्डकथासंग्रहः । राजी = पद्मम् । अनेन राक्षसयुद्धारम्भकृतहर्षो ध्वनितः । शरभाङ्गाद्या ऋषयः ॥ ४१ ॥

सुतीक्ष्णं चाप्यगस्त्यश्च अगस्त्यभ्रातरं तथा ।
अगस्त्यवचनाच्चैव जग्राहैन्द्रं शरासनम् ॥ ४२ ॥

❀ अभिनव-राजलक्ष्मीः ❀

[ अन्वयः ] सुतीक्ष्णं चापि, अगस्त्यं च, अगस्त्यभ्रातरं तथा—[ रामो ददर्शेति पूर्व ४१ श्लोकान्वयि, ]
अगस्त्यवचनाच्चैव ऐन्द्रं शरासनं जग्राह ।

[ विग्रहः ] अगस्त्यस्य भ्राता, अगस्त्यभ्राता तम् । अगस्त्यस्य वचनम्—अगस्त्यवचनं, तस्मात्—। इन्द्रादागतम्—ऐन्द्रम् ।

[ अर्थः ] सुतीक्ष्णं = तन्नामकं मुनिश्चापि, अगस्त्यश्च = तन्नामकं मुनिश्च, अगस्त्य भ्रातरं तथा = अगस्त्यमुनिभ्रात-रञ्च,-[रामो ददर्श हेत्यर्थः] । अगस्त्यवचनात् चैव = अगस्त्य-मुनिशासनात् चैव, ऐन्द्रम् = इन्द्रदेवताकं, दिव्यं, शरासनं = धनुः, जग्राह = गृहीतवान् । [ वाच्यप. ] ऐन्द्रं धनुर्जगृहे ।

[ भाषा ] रामजी ने अगस्त्य आदि मुनियों का दर्शन किया, और अगस्त्य की कृपा से दिव्य धनुष प्राप्त किया ॥ ४२ ॥

❀ तिलकः ❀

चापीति—निपातसमुच्चयः पद्यपूरकः । अगस्त्यभ्रातेध्मवाहननामेति

केचित् । 'ततो मुनेरगस्त्यस्य भ्रातागस्त्य इति श्रुतः । स चिन्वन्कानने वन्यं सखीभिः कोपितोऽशपत्' इति मार्कण्डेयपुराणे श्रूयते । दिव्यं धनुरादिकं कार्याय प्रतिगृहाणेत्येवं रूपादगस्त्यवचनात् । ऐन्द्रमिन्द्रादगस्त्यमागतं शरासनं धनुर्जग्राह । पूर्वं भार्गवं जित्वा ततः प्राप्तं यद्वैष्णवं धनुर्भगवता रामेण वरुणे न्यस्तं तदिन्द्रेण वरुणादानीयागस्त्ये स्थापितमित्यग्रेऽरण्यकाण्डे स्फुटम् । यद्वेन्द्रो विष्णुः ॥ ४२ ॥

**खड्गं च परमप्रीतस्तूणौ चाक्षयसायकौ ।**
**वसतस्तस्य रामस्य वने वनचरैः सह ॥ ४३ ॥**

ॐ अभिनव-राजलक्ष्मीः ॐ

[ अन्वयः ] परमप्रीतःखड्गञ्च अक्षयसायकौ तूणौ च ['जग्राहे'ति पूर्वेण ४२ अन्वयः ] वनेचरैः सह वने वसतः तस्य रामस्य— [ ऋषयोऽभ्यागमन्नित्यग्रिम ४४ श्लोकेनान्वयः । ]

[विग्रहः] परमं यथा स्यात् तथा—प्रीतः—परमप्रीतः । अक्षयाः सायका ययोस्तौ—अक्षयसायकौ । वने चरन्तीति वनचराः, तैः—।

[ अर्थः ] परमप्रीतः = प्रसन्नः, [ रामः ] खड्गञ्च = असिश्च, अक्षयसायकौ = अक्षयबाणपूर्णौ, तूणौ च = निषङ्गौ च, [ जग्राहेति पूर्वेण सम्बन्धः ] । वनचरैः सहः—वनवासिभिः मुन्यादिभिः सह, वने = दण्डकारण्ये, वसतः = निवसतः, रामस्य— [ समीपे ऋषय आगता इत्यर्थः ] ।

[ भाषा ] बन में रहते हुए रामजी के पास ऋषिगण आए ॥ ४३ ॥

ॐ तिलकः ॐ

खड्गं चेति—अनुरूपनिजायुधलाभात्परमप्रीतः । अक्षयाः सायका बाणा ययोस्तौ । तूणी = इषुधी । वनचरैर्वानप्रस्थैः ॥ ४३ ॥

**ऋषयोऽभ्यागमन् सर्वे वधायासुररक्षसाम् ।**
**स तेषां प्रतिशुश्राव राक्षसानां तदा वने ॥ ४४ ॥**

❀ अभिनव-राजलक्ष्मीः ❀

[ अन्वयः ] सर्वे ऋषयः असुररक्षसां वधाय अभ्यागमन् । तदा स वने राक्षसानां [ वधं ] तेषां प्रतिशुश्राव ।

[ विग्रहः ] असुराश्च रक्षांसि च–असुररक्षांसि, तेषाम्—।

**[ अर्थः ] सर्वे ऋषयः = निखिला मुनयः, असुररक्षसां = दैत्यानां–राक्षसानाञ्च, वधाय = नाशाय, अभ्यागमन् = रामस्य समीपमुपजग्मुः । तदा = तस्मिन् काले, सः = रामः, वधं, तेषां = तेभ्य ऋषिभ्यः—[ चतुर्थ्यर्थे षष्ठी ] वने = कानने राक्षसानां = निशाचराणां, प्रतिशुश्राव = प्रतिज्ञातवान् ।**

**[ वा. प. ] ऋषिभिरभ्याजग्मे । तेन वधः प्रतिशुश्रुवे ।**

[भाषा] सब हाल जान रामजी ने राक्षसों के मारने की प्रतिज्ञा की ॥४४॥

❀ तिलकः ❀

**ऋषय इति**—तद्वने वसतो रामस्यान्तिकमसुराः कबन्धादयो रक्षांसि खरादयस्तेषां वधाय वधं प्रार्थयितुं सर्वे ऋषयोऽभ्यागमन् । स रामस्तेषां राक्षसानां वधं = तस्मिन्वने तेभ्यो ऋषिभ्यः प्रतिशुश्राव । 'प्राप्तकालमसुररक्षो योधयिष्ये नोपेक्षिष्य' इति तद्वचोऽङ्गीकृतवानित्यर्थः ॥ ४४ ॥

**प्रतिज्ञातश्च रामेण वधः संयति रक्षसाम् ।**
**ऋषीणामग्निकल्पानां दण्डकारण्यवासिनाम् ॥४५॥**

❀ अभिनव-राजलक्ष्मीः ❀

[ अन्वयः ] अग्निकल्पानां दण्डकारण्यवासिनाम् ऋषीणां [ पुरतः ] रामेण संयति रक्षसां वधः प्रतिज्ञातश्च ।

[ विग्रहः ] ईषदसमाप्ता अग्नयः, अग्निकल्पाः, तेषाम्–। दण्डकारण्ये वसन्ति तच्छीलाः, दण्डकारण्यवासिनः, तेषाम्–।

[ अर्थः ] अग्निकल्पानां = दीप्ताग्नितेजसां, दण्डकारण्यवासिनां = दण्डकवनमधिवसताम्, ऋषीणां = मुनीनां, पुरतः; रामेण–संयति = युधि, समुदायः स्त्रियां "संयत्समित्याजिसमिद्युधः" इत्यमरः। रक्षसां = राक्षसानां, वधः = मारणं, प्रतिज्ञातः = स्वीकृतः।

[ वा. प. ] रक्षसां वधो रामेण प्रतिज्ञायते स्म।

[ भाषा ] ऋषियों के दुःखों को सुन रामजी ने राक्षसों के नाश की प्रतिज्ञा की। ४५

❀ तिलकः ❀

प्रतिज्ञात इति––अग्निकल्पानामग्निसदृशानामृषीणाम्। सन्निधाविति शेषः। अपेक्षित इति वा शेषः। संयति युद्धऽचिन्त्यामितनिजशक्तिवैभवाद्रक्षसां वधः प्रतिज्ञातश्चेति संबन्धः॥ ४५॥

तेन तत्रैव वसता जनस्थाननिवासिनी।
विरूपिता शूर्पणखा राक्षसी कामरूपिणी॥ ४६॥

❀ अभिनव-राजलक्ष्मीः ❀

[ अन्वयः ] तत्र एव वसता तेन जनस्थाननिवासिनी कामरूपिणी शूर्पणखा विरूपिता।

[ विग्रहः ] जनस्थाने निवसति तच्छीला-जनस्थाननिवासिनी। कामं रूपयति तच्छीला–कामरूपिणी।?।

[ अर्थः ] तत्रैव = दण्डकारण्य एव, वसता = तिष्ठता, तेन = राघवेण, जनस्थाननिवासिनी = दण्डकारण्यप्रदेशनिवा-

सिनी, कामरूपिणी = इच्छाविग्रहा, शूर्पणखा = तदाख्या रावण-भगिनी, विरूपिता = नासिकादिकर्त्तनेन विकलाङ्गतां नीता।

[ वा. प. ] तत्र निवसन् रामः शूर्पणखां व्यरूपयत्।

[ भाषा ] रामजी ने वहाँ रहनेवाली शूर्पणखा के नाक-कान काटे।।४६।।

❀ तिलकः ❀

तेनेति—तेन रामेण तत्रैव = दण्डकारण्यदक्षिणप्रदेशवर्तिपञ्चवट्याश्रमे, जनस्थानं नाम = दण्डकारण्ये रावणस्य बलनिवेशस्थानम्। कामरूपिणीच्छया नानारूपधारणी। यद्वा पुंसां काम्यमानरूपवती। विरूपिता=कर्णनासाच्छेदेन वैरूप्यं प्रापिता। शूर्पणखेत्यत्र "नखमुखात्संज्ञायाम्" इति ङीषनिषेधः। "पूर्वपदात्संज्ञायाम्—" इति णत्वम्। विरुद्धं रूपं विरूपं तत्सञ्जात-मस्या इति तारकादित्वादितच्॥ ४६॥

ततः शूर्पणखावाक्यादुद्युक्तान् सर्वराक्षसान्।
खरं त्रिशिरसं चैव दूषणं चैव राक्षसम्॥ ४७॥

❀ अभिनव-राजलक्ष्मीः ❀

[ अन्वयः ] ततः शूर्पणखावाक्यात् उद्युक्तान् सर्वराक्षसान्, खरं त्रिशिरसं चैव दूषणञ्चैव राक्षसं—[ निजघानेति ४८ श्लोकेन सम्बन्धः। ]

[ विग्रहः ] शूर्पणखायाः वाक्यं,-शूर्पणखावाक्यं, तस्मात्—। सर्वे च ते राक्षसाश्च—सर्वराक्षसाः, तान्—।

[ अर्थः ] ततः = तदनन्तरं, शूर्पणखावाक्यात् = शूर्पणख्या आक्रन्दनं श्रुत्वा, उद्युक्तान् = युद्धाय कृतसंरम्भान्, सर्वराक्षसान् = निखिलान् निशाचरान्, खरं = तन्नामानं, त्रिशिरसञ्चैव= तन्नामानमपि निशाचरं, दूषणञ्चैव = दूषणमपि राक्षसं = निशा-विहारिणं, [ "रणे रामो निजघाने"ति ४८ श्लोकेनान्वेति ]।

[भाषा] रामजी ने खर दूषण त्रिशिरा आदि राक्षसों को मार डाला।।४७।।

❀ तिलकः ❀

तत इति—ततस्तद्वैरूप्यकरणानन्तरम्। सर्वराक्षसान् जनस्थाननिवासिन इति शेषः। उद्युक्तान् = युद्धार्थं सन्नद्धान् ॥ ४७ ॥

**निजघान रणे रामस्तेषां चैव पदानुगान्।**
**वने तस्मिन् निवसता जनस्थाननिवासिनाम् ॥ ४८ ॥**

❀ अभिनव-राजलक्ष्मीः ❀

[अन्वयः] रामः रणे तेषाञ्चैव पदानुगान् निजघान। तस्मिन् वने निवसता जनस्थाननिवासिनां [—"रक्षसां चतुर्दशसहस्राणि निहतानी" ति सम्बन्धोऽग्रिमेणार्धेन]।

[विग्रहः पदान्यनुगच्छन्ति-पदानुगाः, तान्। जनस्थाने निवसन्ति तच्छीलाः, जनस्थाननिवासिनः, तेषाम्।

[अर्थः] रामः—रणे = युद्धे, तेषां = खरदूषणादीनां, पदानुगांश्चैव = अनुचरान्—राक्षसान् अपि, निजघान = अवधीत्, तस्मिन् वने = दण्डकारण्य एव, निवसता = तिष्ठता,—रामेण, जनस्थाननिवासिनां = तदाख्यकाननवासिनां [राक्षसानां चतुर्दशसहस्राणि १४००० निहतानीत्यर्थः]।

[वा. प.] रामेण पदानुगा निजघ्निरे।

[भाषा] रामजी ने खरदूषण की सेना को भी मार डाला ॥ ४८ ॥

❀ तिलकः ❀

पदानुगाननुचरान्। निवसता। रामेणेति शेषः। उत्तरश्लोकान्वयी॥४८॥

**रक्षसां निहतान्यासन् सहस्राणि चतुर्दश।**
**ततो ज्ञातिवधं श्रुत्वा रावणः क्रोधमूर्च्छितः ॥ ४९ ॥**

❀ अभिनव-राजलक्ष्मीः ❀

[ अन्वयः ] रक्षसां चतुर्दश सहस्राणि निहतानि-आसन्। ततः रावणः ज्ञातिवधं श्रुत्वा क्रोधमूर्च्छितः-[ सहायं वरयामास मारीचं नाम राक्षसमित्यग्रिम ५० श्लोकार्धेन सम्बन्धः ]।

[ विग्रहः ] ज्ञातीनां वधः,-ज्ञातिवधः, तम्। क्रोधेन मूर्च्छितः क्रोधमूर्च्छितः।

[ अर्थः ] रक्षसां = राक्षसानां, चतुर्दशसहस्राणि—निहतानि = व्यापादितानि, आसन् = अभवन्।

ततः = तदनन्तरं-रावणः = दशाननः, ज्ञातिवधं = बन्धुविनाशं, श्रुत्वा = आकर्ण्य, क्रोधमूर्च्छितः = क्रोधान्धः सन्—[ मारीचं सहायमकरोत्-इत्यर्थः ]।

[ वाच्यप० ] चतुर्दशभिः सहस्रैर्निहतैर्बभूवे।

[ भाषा ] भगवान ने १४ हजार राक्षसों का संहार किया, यह सुन रावण क्रोध से जल उठा ॥ ४९ ॥

❀ तिलकः ❀

**रक्षसामिति**—चतुर्दशसहस्राणि = तत्सङ्ख्यातानि सैन्यानीति शेषः। ज्ञातयः खरादयः। खरादयो हि रावणस्य वैमात्रेयाः। श्रुत्वा—शूर्पणखामुखादिति शेषः। मूर्च्छितो = व्याप्तचित्तः ॥ ४९ ॥

**सहायं वरयामास मारीचं नाम राक्षसम्।**
**वार्यमाणः सुबहुशो मारीचेन स रावणः ॥ ५० ॥**

❀ अभिनव-राजलक्ष्मीः ❀

[ अन्वयः ] मारीचेन सः रावणः सुबहुशः वार्यमाणः—मारीचं राक्षसं सहायं वरयामास।

[ अर्थः ] मारीचेन = तदाख्यराक्षसेन, स रावणः = स

दशाननः, सुबहुशः = भूयो भूयः, वार्यमाणः = निषिध्यमानोऽपि—मारीचं = मारीचनामानं, राक्षसं = निशाचरं, सहायम् = अनुचरम्, "अनुप्लवः सहायश्चानुचरोऽभिचरः समाः" इत्यमरः। वरयामास = प्रार्थयामास।

[ वा प. ] रावणेन मारीचः सहायो वृतः।

[ भाषा ] रावण ने मारीच से सहायता मांगी, मारीच ने उसे बहुत समझाया ॥ ५० ॥

❀ तिलकः ❀

क्रोधेन व्याप्तः स रावणो मारीचेन बहुशो = बहुवारं "परदारहरणस्य परमाधर्मत्वं, बलवद्विरोधस्य निजनाशान्तत्वम् अतस्तेन रामेण बलवता—विश्वामित्राश्रमे मदनुभूतबलेन—ते तव विरोधो न क्षमो = न युक्तो न हितश्चे"ति वार्यमाणोऽपि मारीचं नाम प्रसिद्धं राक्षसं सीताहरणे सहायं वरयामास। 'वृञ् वरणे' इति स्वार्थे ण्यन्तोऽपि ॥ ५० ॥

**न विरोधो बलवता क्षमो रावण ! तेन ते।**
**अनादृत्य तु तद्वाक्यं रावणः कालचोदितः ॥ ५१ ॥**

❀ अभिनव-राजलक्ष्मीः ❀

[ अन्वयः ] रावण ! बलवता तेन ते विरोधः न क्षमः, [ 'इति वार्यमाण' इति पूर्वेण ५० श्लोकेन सम्बन्धः । ] कालचोदितः रावणः तु तद्वाक्यम् अनादृत्य—[ जगामेत्युत्तरेण ५२ श्लोकेनान्वयः ]

[ विग्रहः ] बलमस्त्यस्य बलवान्, तेन। कालेन चोदितः—कालचोदितः।

[ अर्थः ] रावण = हे दशानन ! बलवता = बलीयसा, तेन = रामेण, ते = तव, विरोधः = वैरं, "विरोधो वैरभावः

स्या"दिति कोशः। न क्षमः = नोचितः, "क्षमं शक्ते हिते त्रिषु" इत्यमरः। कालचोदितः = मृत्युप्रेरितः, रावणस्तु = दशाननस्तु, तद्वाक्यं = मारीचोपदेशवाक्यं, अनादृत्य = अस्वीकृत्य,-[तदाश्रमपदं जगामेत्यर्थः।]

[भाषा] मारीच नें रावण को बहुत समझाया, पर रावण ने उसका उपदेश नहीं सुना ॥५१॥

❀ तिलकः ❀

नेति—पूर्वार्धं पूर्वान्वयि। कालचोदितो=मृत्युप्रेरितो रावणस्तद्वाक्य=मारीचवाक्यं त्वनादृत्य ॥ ५१ ॥

**जगाम सहमारीचस्तस्याश्रमपदं तदा।**
**तेन मायाविना दूरमपवाह्य नृपात्मजौ ॥ ५२ ॥**

❀ अभिनव-राजलक्ष्मीः ❀

[अन्वयः] तदा सह मारीचः तस्य आश्रमपदं जगाम मायाविना तेन नृपात्मजौ दूरम् अपवाह्य–[रामभार्यां जहारेति ५३ उत्तरश्लोकेनान्वयः]।

[विग्रहः] मारीचेन सहितः सहमारीचः, आश्रम एव पदम्–आश्रमपदं, तत्–। मायाऽस्त्यस्य मायावी, तेन। नृपस्यात्मजौ–नृपात्मजौ।

[अर्थः] तदा = तस्मिन् काले, सहमारीचः = मारीचसहितः रावणः, तस्य = रामस्य, आश्रमपदं = निवासस्थानं, जगाम = अगच्छत्।

मायाविना = शाम्बरीमायाकुशलेन, तेन = मारीचेन, नृपात्मजौ = रामलक्ष्मणौ, दूरम् = विप्रकृष्टम्, अपवाह्य = अपनीय, रामस्य भार्यां-सीतां रावणो जहारेत्यर्थः]।

[ भाषा ] रावण ने मारीच की माया से रामलक्ष्मण को आश्रम से दूर कर सीता का चुरा लिया ॥ ५२ ॥

❀ तिलकः ❀

सहमारीचो—मारीचसहितः। "वोपसर्जनस्य" इति विकल्पात्सहस्य सादेशाभावः। तस्य = खरादिहन्तृत्वेन प्रसिद्धस्य रामस्याश्रमपदम् = आश्रमस्थानं जगाम। ततस्तेन मायाविना = मारीचेन तौ नृपात्मजौ = रामलक्ष्मणौ दूरमवाह्य = अपसार्य ॥ ५२ ॥

**जहार भार्यां रामस्य गृध्रं हत्वा जटायुषम्।**
**गृध्रं च निहतं दृष्ट्वा हृतां श्रुत्वा च मैथिलीम् ॥५३॥**

❀ अभिनव-राजलक्ष्मीः ❀

[ अन्वयः ] जटायुषं गृध्रं हत्वा रामस्य भार्यां जहार। गृध्रं च निहतं दृष्ट्वा मैथिलीं च हृतां श्रुत्वा [ राघवो विललापेत्युत्तर-५४ श्लोकेनान्वयः ]

[ अर्थः ] जटायुषं = तन्नामकं, गृध्रं = गृध्रराजं "दाक्षाय्य-गृध्रौ" इत्यमरः। हत्वा = विपक्षं कृत्वा, रावणः = दशकन्धरः, रामस्य भार्यां = रामपत्नीं सीतां, जहार = चोरयामास।

गृध्रं च = जटायुषं च, निहतं = व्यापादितप्रायं, दृष्ट्वा = विलोक्य, मैथिलीं च = सीतां च, हृताम् = अपनीतां, श्रुत्वा = जटायुर्मुखात् आकर्ण्य–[ राघवो विललापेत्यर्थः ]

[ वा० प० ] रावणेन रामाभार्या जह्रे।

[ भाषा ] रामजीनें गृध्रराज को मरा हुआ देख, और सीता को चुराई हुई जान [ बहुत शोक किया ] ॥ ५३ ॥

❀ तिलकः ❀

जहारेति—हत्वा=हतप्रायं कण्ठगतप्राणं कृत्वा, रामस्य भार्यां जहारेति संबन्धः। निहतं = निहतप्रायम्। श्रुत्वा—गृध्रमुखादिति शेषः ॥ ५३ ॥

**राघवः शोकसन्तप्तो विललापाकुलेन्द्रियः ।**
**ततस्तेनैव शोकेन गृध्रं दग्ध्वा जटायुषम् ॥ ५४ ॥**

❀ अभिनव-राजलक्ष्मीः ❀

[ अन्वयः ] शोकसन्तप्तः आकुलेन्द्रियः राघवः विललाप । ततः तेनैव शोकेन जटायुषं गृध्रं दग्ध्वा–[ 'सीतां मार्गमाणो कबन्धं नाम राक्षसं ददर्शे'ति ५५ श्लोकेनान्वयः ]

[ विग्रहः ] शोकेन सन्तप्तः–शोकसन्तप्तः । आकुलानीन्द्रियाणि यस्यासौ–आकुलेन्द्रियः ।

**[ अर्थः ] शोकसन्तप्तः = शोकविकलः, आकुलेन्द्रियः = व्याकुलेन्द्रियग्रामः, राघवः = रामचन्द्रः, विललाप = शुशोच ।**

**ततः = तदनन्तरं, तेनैव शोकेन = सीतापहार-गृध्रवध-शोकेन, व्याकुलः सन्–जटायुषं गृध्रं = जटायुर्नामकं गृध्रराजं, दग्ध्वा = अग्निसान्निधाय,–[ वने सीतां मार्गयमाणो कबन्धं नाम राक्षसं ददर्शेत्यर्थः ] ।**

**[ वा० प० ] राघवेण विलेपे ।**

[ भाषा ] रामचन्द्रजी शोक से व्याकुल हो विलाप करने लगे और गृध्र का अग्निसंस्कार कर—सीता को खोजने लगे ॥ ५४ ॥

❀ तिलकः ❀

विललाप=पर्यदेवयत् । आकुलेन्द्रियः=शोकपरवशेन्द्रियः । तेनैव शोकेन = निवृत्तिहेतुमप्राप्तेनाभिभूयमान एव सन्, गृध्रं—रावणेन सीतापहृतेति निवेद्य मृतं—दग्ध्वा = विधिना संस्कृत्य—॥ ५४ ॥

**मार्गमाणो वने सीतां राक्षसं स ददर्श ह ।**
**कबन्धं नामरूपेण विकृतं घोरदर्शनम् ॥ ५५ ॥**

❀ अभिनव-राजलक्ष्मीः ❀

[ अन्वयः ] सः वने सीतां मार्गमाणः रूपेण विकृतं घोर-दर्शनं कबन्धं नाम राक्षसं ददर्श ह ।

[ विग्रहः ] घोरं दर्शनं यस्यासौ—घोरदर्शनः, तम् ।

**[ अर्थः ] सः = राघवः, वने = दण्डकारण्ये, सीतां=जानकीं, मार्गमाणः = अन्विष्यन्, रूपेण विकृतं = विकृतरूपं, घोरदर्शनं = भीषणदर्शनं, कबन्धं नाम = कबन्धनाम्ना प्रसिद्धं, राक्षसं = निशाचरं, ददर्श ह = विलोकयामास किल ।**

**[ वाच्यप० ] तेन कबन्धो ददृशे ।**

[ भाषा ] रामजीनें सीता को खोजते २ वन में कबन्ध नामक भीषण राक्षस को देखा ॥ ५५ ॥

❀ तिलकः ❀

सीतां वने मार्गमाणः = मार्गयमाण इत्यर्थः । रूपेण विकृतं कबन्धं राक्षसम्—ददर्शेति संबन्धः ॥ ५५ ॥

**तं निहत्य महाबाहुर्ददाह स्वर्गतश्च सः ।**
**स चास्य कथयामास "शबरीं धर्मचारिणीम् ॥५६॥**

❀ अभिनव-राजलक्ष्मीः ❀

[ अन्वयः ] महाबाहुः तं निहत्य ददाह । स्वर्गतः स च धर्मचारिणीं शबरीम् अस्य कथयामास ।

[ विग्रहः ] महान्तौ बाहू यस्यासौ—महाबाहुः । धर्मं चरति तच्छीला-धर्मचारिणी, तां ।

**[ अर्थः ] महाबाहुः = आजानुभुजः, राघवः, तं = कबन्धं, निहत्य = विनाश्य, ददाह = अग्नौ प्रचिक्षेप ।**

**स्वर्गतः = आकाशस्थितः, स च = कबन्धश्च, धर्मचारिणीं =**

धर्माचरणशीलां, श्रमणां = प्रव्रजितां, शबरीं = तन्नाम्नीम्। अस्य = राघवाय, [चतुर्थ्यै षष्ठी] कथयामास = निवेदितवान्।

[ वा० प० ] स महाबाहुना देहे। तेन शबरी कथयाञ्चक्रे।

[ भाषा ] रामजी ने कबन्ध का वधकर उसका अग्निसंस्कार किया। आकाश में जा कबन्ध ने शबरी के पास जाने का राम को आदेश किया॥५६॥

❀ तिलकः ❀

तमिति—कबन्धं निहत्य ददाह। महाबाहू रामः। स च = कबन्धः, स्वर्गतः=स्वर्गगमनयोग्यं स्वीयं गन्धर्वरूपं प्राप्तवान्, ततः = तेन रूपेण। अस्य = रामस्य ॥ ५६ ॥

श्रमणां धर्मनिपुणामभिगच्छेति राघव"।
सोऽभ्यगच्छन्महातेजाः शबरीं शत्रुसूदनः॥ ५७॥

❀ अभिनव-राजलक्ष्मीः ❀

[ अन्वयः ] राधव! धर्मनिपुणां श्रमणाम् अभिगच्छेति— [ स चास्य कथयामासेति पूर्व ५६ श्लोकेनान्वयः ]

[ तच्छ्रुत्वा– ]महातेजाः शत्रुसूदनः स शबरीमभ्यगच्छत्।

[ विग्रहः ] धर्मे निपुणा-धर्मनिपुणा, महत् तेजो यस्यासौ— महातेजाः। शत्रूणां सूदनः-शत्रुसूदनः।

[अर्थः] हे राघव!=हे रामचन्द्र! धर्मनिपुणां=धर्मतत्त्वज्ञाम्, श्रमणां = तापसीं शबरीम्, अभिगच्छ = प्राप्नुहि, [इति रामाय· कथयामासेत्यर्थः।] महातेजाः = महापराक्रमः, शत्रुसूदनः = रिपुनाशनः, सः = रामः, शबरीम् = अभ्यगच्छत् = समासस्राद।

[ वाच्यप० ] शबरी तेन अभ्यगम्यत।

[ भाषा ] कबन्ध ने कहा कि–हे राम! वह शबरी धर्म के तत्व को खूब जानती है, उससे मिलिए, तब भगवान् शबरी के आश्रम में गए ॥५७॥

❀ तिलकः ❀

श्रमणां=तापसीम् । धर्मनिपुणां=सकलधर्मज्ञाम् । धर्मचारिणीमित्यस्य तु सकलधर्मानुष्ठात्रीमित्यर्थः । श्रमणामित्यत्र कर्तरि ल्युट्,—तपसा श्राम्यतीत्यर्थात् । तामभिगच्छेति—कथयामासेत्यन्वयः ॥ ५७ ॥

**शबर्या पूजितः सम्यग्रामो दशरथात्मजः ।**
**पम्पातीरे हनुमता संगतो वानरेण ह ॥ ५८ ॥**

❀ अभिनव-राजलक्ष्मीः ❀

[ अन्वयः ] दशरथात्मजः रामः शबर्या सम्यक् पूजितः । पम्पातीरे हनूमता वानरेण संगतः ह ।

[ विग्रहः ] दशरथस्यात्मजः-दशरथात्मजः; पम्पायाः तीरं—पम्पातीरं, तस्मिन्—।

[ अर्थः ] दशरथात्मजः = दशरथसूनुः, "आत्मजस्तनयः सूनुः सुतः पुत्रः" इत्यमरः। रामः—शबर्या = धर्मचारिण्या, सम्यक् = यथावत्, पूजितः = सत्कृतः ।

[ ततः— ] पम्पातीरे = पम्पासरोवरतटे, हनूमता = तदाख्येन, वानरेण = कपिमुख्येन सङ्गतः = मिलितः ह, ।

[ भाषा ] शबरी ने भगवान् की सादर पूजा की। रामजी वहाँ से आगे चले तब पम्पा के तीर पर हनूमान् जी से उनकी भेंट हुई ॥ ५८ ॥

❀ तिलकः ❀

शबर्येति—सम्यक्पूजितो यथाविध्यर्घ्याद्युपचारैः पूजितः । पम्पेत्यादिना किष्किन्धाकाण्डकथासंग्रहः । सङ्गतः = मिलितः ॥ ५८ ॥

**हनुमद्वचनाच्चैव सुग्रीवेण समागतः ।**
**सुग्रीवाय च तत्सर्वं शंसद्रामो महाबलः ॥ ५९ ॥**

❀ अभिनव-राजलक्ष्मीः ❀

[ अन्वयः ] हनूमद्वचनाच्चैव सुग्रीवेण समागतः, सुग्रीवाय च तत्सर्वं महाबलः रामः शंसत् (अशंसत् इति तदर्थः।)

[ विग्रहः ] प्रशस्ता हनुरस्य-हनुमान्, तस्य वचनं-तस्मात्—।

**[ अर्थः ] हनूमद्वचनाच्चैव = 'सुग्रीवो वानरमुख्यो भवता मैत्रीमिच्छति' इति मारुतिवचनादेव, सुग्रीवेण = कपिमुख्येन, समागतः = मैत्रीं चकार। सुग्रीवाय = कपिमुख्याय च, तत्सर्वं = स्ववनागमनवृत्तान्तं, महाबलः = अतिपराक्रमी, रामः=राघवः, शंसत्=अकथयत्।**

[ भाषा ] सुग्रीव से रामजी ने अपना सब हाल कहा !॥ ५९ ॥

❀ तिलकः ❀

हनुमद्वचनात्='सुग्रीवो युष्मन्मैत्रीमपेक्षत' इत्यादिरूपात्। समागतः= मैत्रीं कृतवान्। हनुशब्दो ह्रस्वान्तो दीर्घान्तश्च। सुग्रीवाय तु= सङ्गतायेति शेषः, शंसदकथयत्। छान्दसोऽडभावः। महाबलः = सुग्रीवेण स्वकार्य-साधकमहाबलवत्त्वेनावगतः ॥ ५९ ॥

**आदितस्तद्यथावृत्तं सीतायाश्च विशेषतः।**
**सुग्रीवश्चापि तत्सर्वं श्रुत्वा रामस्य वानरः ॥ ६० ॥**

❀ अभिनव-राजलक्ष्मीः ❀

[ अन्वयः आदितः यथावृत्तं तत्, सीतायाश्च विशेषतः— [ रामः शंसत् इति पूर्वेण ५९ श्लोकेनान्वयः ]

सुग्रीवश्चापि वानरः रामस्य तत् सर्वं श्रुत्वा—['सख्यं चकारे' ति ६१ श्लोकेनान्वयः ] [ विग्रहः ] वृत्तमनतिक्रम्य-यथावृत्तम्।

**[ अर्थः ] आदितः = जन्मकालादारभ्य, यथावृत्तं = क्रमशः, तत् = प्रसिद्धं, [ सर्वं वृत्तान्तं रामः सुग्रीवाय अशंसदित्यर्थः ]**

सीतायाश्च = जानक्याश्च, विशेषतः=विस्तरेण, [अशंसदित्यर्थः]

सुग्रीवो वानराधिपोऽपि तत् = रामेण कथितं, सर्वं = सकलं वृत्तान्तं, श्रुत्वा = आकर्ण्य—[—मैत्रीं चकार । ]

[ भाषा ] रामजी ने अपना और सीता का सब हाल सुग्रीव से कहा। और इस प्रकार सुग्रीव से रामजी की मित्रता हो गई ॥ ६० ॥

❀ तिलकः ❀

आदित इति—जन्मन आरभ्येत्यर्थः । तत् = सुप्रसिद्धं वृत्तं स्वीयं, सीतायाश्च वृत्तं विशिष्य—रावणापहारान्तमशंसत् । यद्यपि महाबलत्वाद्विनापि सहायं सर्वनिर्वाहकस्तथापि लोकरीतिमनुसृत्य सुग्रीवमैत्रीमुद्दिश्य सर्वमकथयदिति बोद्धव्यम् । वानरः सुग्रीवोऽपि रामस्य संबन्धि तत्सर्वं श्रुत्वा—॥ ६० ॥

**चकार सख्यं रामेण प्रीतश्चैवाग्निसाक्षिकम् ।**
**ततो वानरराजेन वैरानुकथनं प्रति ॥ ६१ ॥**

❀ अभिनव-राजलक्ष्मीः ❀

[ अन्वयः ] प्रीतश्चैव रामेण अग्निसाक्षिकं सख्यं चकार ।
ततः वैरानुकथनं प्रति वानरराजेन—[ 'रामाय सर्वमावेदित'-मिति परेण ६२ श्लोकेनान्वयः ]

[ विग्रहः ] अग्निः साक्षी यस्य तत्–अग्निसाक्षिकम्, तत्–वानराणां राजा–वानरराजः, तेन । वैरस्यानुकथनं,–वैरानुकथनम् ।

[ अर्थः ] [ रामस्य वृत्तं श्रुत्वा सुग्रीवः— ] प्रीतश्चैव = समानदुःखमहाबल–मित्रलाभात्–प्रसन्नः सन् । रामेण = रामेण सह, अग्निसाक्षिकम् = अग्निसमक्षं, "साक्षी द्रष्टा समक्षश्चे"ति कोशः । सख्यं = मैत्रीं, चकार = कृतवान् [ इति पूर्व श्लोकेन ६० अन्वयः ] ततः = तदनन्तरं, वैरानुकथनं = "वालिना सह वैरस्य

को हेतु"रिति रामचन्द्रकृतप्रश्नं प्रति—वानरराजेन = सुग्रीवेण—[ सर्वमावेदितमित्यर्थः ]।

[ भाषा ] सुग्रीव ने रामजी से (अग्नि को साक्षी) बना मित्रता की। तब राम जी ने सुग्रीव से वाली से लड़ाई का कारण पूछा—॥ ६१ ॥

❀ तिलकः ❀

स्वसमानदुःखमहाबलसंबन्धलाभात्प्रीतः सुग्रीवोऽग्निसाक्षिकमग्निरेव साक्षाद्द्रष्टा यस्य तादृशं सख्यं चकार। ततो वैरानुकथनं = वालिनस्तव च वैरे किं कारणमिति रामकृतप्रश्नं प्रति—प्रश्नोत्तरमिति यावत् ॥ ६१ ॥

**रामायावेदितं सर्वं प्रणयाद् दुःखितेन च।**
**प्रतिज्ञातं च रामेण तदा वालिवधं प्रति ॥ ६२ ॥**

❀ अभिनव-राजलक्ष्मीः ❀

[ अन्वयः ] दुःखितेन ( सुग्रीवेण ) च प्रणयात् सर्वं रामाय आवेदितम्। रामेण च तदा वालिवधं प्रति प्रतिज्ञातम्।

[ विग्रहः ] वालिनो वधः—वालिवधः, तं—।

[ अर्थः ] दुःखितेन = दुःखाकुलेन,—सुग्रीवेण च, प्रणयात् = विश्वासात्, "प्रणयास्त्वमी—विस्रम्भयाञ्चा—प्रेमाणः"—इत्यमरः। सर्वं = सकलमात्मवृत्तं, रामाय आवेदितं = कथितम्। रामेण च तदा = तच्छ्रुत्वा, वालिवधं प्रति = वालिमारणं प्रति, प्रतिज्ञातं = प्रतिज्ञा कृता।

[ भाषा ] दुःखित हो सुग्रीव ने अपना सब हाल कहा, तब भगवान् ने वालि के वध की प्रतिज्ञा की ॥ ६२ ॥

❀ तिलकः ❀

रामाय यत्प्रत्युत्तरमावेदितव्यं तत्सर्वं रामवद्दारापहारान्तकष्टैः सञ्जातदुःखेन सुग्रीवेण प्रणयाद्रामायावेदितम्। तदा=तद्वृत्तान्तश्रवणानन्तरकाले,

रामेण वालिवधं प्रति = वालिवधमुद्दिश्यावश्यं वालिनं वधिष्यामीति प्रतिज्ञातम् ॥ ६२ ॥

**वालिनश्च बलं तत्र कथयामास वानरः ।**
**सुग्रीवः शङ्कितश्चासीन्नित्यं वीर्येण राघवे ॥ ६३ ॥**

❀ अभिनव-राजलक्ष्मीः ❀

[ अन्वयः ] तत्र वानरः वालिनः बलं कथयामास ।
सुग्रीवः राघवे वीर्येण नित्यं शङ्कितश्च आसीत् ।

**[ अर्थः ] तत्र = ऋष्यमूके तस्मिन्नवसरे, वानरः = सुग्रीवो नाम वानरमुख्यः, वालिनः बलं = वालिपराक्रमं, कथयामास = वर्णयति स्म । सुग्रीवः—राघवे = रामविषये, वीर्येण = बलेन, नित्यं = सततं, शङ्कितश्च = किमयं रामो वालिनं हन्तुं समर्थो नवेति शङ्काकुलश्च, आसीत् = अभवत् ।**

[ भाषा ] सुग्रीव ने वाली के बल का वर्णन किया, और उसे सन्देह था कि रामजी बाली को मार सकेंगे या नहीं ? ॥ ६३ ॥

❀ तिलकः ❀

**वालिनश्चेति**—तत्र=ऋष्यमूकपर्वते । वानरः सुग्रीवो वालिनो बलमरुणोदयानन्तरं सूर्योदयात्प्रागेव रावणं गृहीत्वा चतुःसमुद्रलङ्घनादिरूपं कथयामास । किञ्च सुग्रीवो 'रामो वालितुल्यो न वे'ति शङ्कितः = सञ्जातशङ्क आसीत् ॥ ६३ ॥

**राघवप्रत्ययार्थं तु दुन्दुभेः कायमुत्तमम् ।**
**दर्शयामास सुग्रीवो महापर्वतसन्निभम् ॥ ६४ ॥**

❀ अभिनव-राजलक्ष्मीः ❀

[ अन्वयः ] सुग्रीवः—राघवप्रत्ययार्थं दुन्दुभेः महापर्वतसन्निभम् उत्तमं कायं दर्शयामास ।

[ विग्रहः ] राघवस्य प्रत्ययः–राघवप्रत्ययः, तस्मै इति–राघवप्रत्ययार्थम् । महांश्चासौ पर्वतश्च महापर्वतः, तेन सन्निभः,–तम् ।

[ अर्थः ] सुग्रीवः - राघवप्रत्ययार्थं = रामबलज्ञानार्थं– "प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु" इत्यमरः । दुन्दुभेः = तन्नाम्नो राक्षसस्य, महापर्वतसन्निभं = महाशैलतुल्यम्, उत्तमं = महाप्रमाणं, कायं = शरीरं, दर्शयामास = निर्दिदेश ।

[ भाषा ] रामजी का बल समझने के लिए सुग्रीव ने दुन्दुभि का— —जिसे वाली ने बात की बात में मार दिया था—बड़ा भारी कंकाल उनको दिखाया ॥ ६४ ॥

❀ तिलकः ❀

राघवेति—राघवस्य वालिमहाबलत्वे विश्वासार्थमुत्तमं बलप्रत्यायनोत्तमसाधनं महापर्वतसदृशं दुन्दुभेर्दैत्यस्य शरीरं दर्शयामास। यस्य काय इदानीमेतादृशस्तादृशो दुन्दुभिर्वालिना हत्वैतावद् दूरं प्रक्षिप्त इत्युक्त्वा दर्शयामासेत्यर्थः ॥ ६४ ॥

**उत्स्मयित्वा महाबाहुः प्रेक्ष्य चास्थि महाबलः ।**
**पादाङ्गुष्ठेन चिक्षेप सम्पूर्णं दशयोजनम् ॥ ६५ ॥**

❀ अभिनव-राजलक्ष्मीः ❀

[ अन्वयः ] महाबाहुः महाबलः—अस्थि प्रेक्ष्य उत्स्मयित्वा च पादाङ्गुष्ठेन सर्वं दशयोजनं चिक्षेप ।

[ विग्रहः ] महान्तौ बाहू यस्य सः । महद् बलं यस्यासौ– महाबलः । पादस्याङ्गुष्ठः-पादाङ्गुष्ठः, तेन ।

[ अर्थः ] महाबाहुः=महाभुजः, महाबलः=बलवान् राघवः, अस्थि = दुन्दुभिकङ्कालं, प्रेक्ष्य = विलोक्य, उत्स्मयित्वा च = ईषद्धसित्वा च, [ ल्यबभाव आर्षः ] । पादाङ्गुष्ठेन = वामपादा-

ङ्गुष्ठेन, सर्वं = सकलं, दशयोजनं = दशयोजनमितं प्रदेशं यावत्, चिक्षेप = क्षिप्तवान् ।

[ भाषा ] भगवान नें हँसकर उन हड्डियों के ढेर को पैर के अंगुठे से ही ४० कोस दूर फेंक दिया ॥ ६५ ॥

❀ तिलकः ❀

उत्स्मयित्वेति—बाहुलकात्स्वार्थे णिच् । ईषत्स्मितं कृत्वा ॥ ६५ ॥

**बिभेद च पुनस्तालान् सप्तैकेन महेषुणा ।**
**गिरिं रसातलं चैव जनयन् प्रत्ययं तदा ॥ ६६ ॥**

❀ अभिनव-राजलक्ष्मीः ❀

[ अन्वयः ] तदा पुनश्च प्रत्ययं जनयन्—एकेन महेषुणा सप्त तालान् गिरिं रसातलं चैव बिभेद ।

[ विग्रहः ] महाश्चासौ–इषुश्च–महेषुः, तेन–महेषुणा ।

[ अर्थः ] तदा=तस्मिन्नेवावसरे,—पुनश्च=पुनरपि, प्रत्ययं= विश्वासं, जनयन् = उत्पादयन्–रामः, एकेन महेषुणा = बाणेन, सप्ततालान् = सप्तसंख्याकान् तालपादपान्, गिरिं = पर्वतं, रसातलं चैव = पातालमपि, बिभेद = विदारयामास ।

[ वाच्यप० ] रामेण सप्तताला बिभिदिरे ।

[ भाषा ] रामजी ने एक ही बाण से सात ताड़ के पेड़, पहाड़ और रसातल कों भी फोड दिया ॥ ६६ ॥

❀ तिलकः ❀

बिभेदेति—पुनश्च प्रत्ययं जनयन् = स्वबलविश्वासमुत्पादयन् । हेतौ शता । फलमपि हेतुः । तदेकेनैव महेषुणा सकृत्प्रयोगेणैव सप्ततालान्सप्तसालवृक्षांस्तत्समीपस्थं गिरिं पर्वतं रसातलं षष्ठमधोलोकं च बिभेद । अतलवितलसुतलतलातलमहातलरसातलपाताला इति सप्ताधो लोकाः ।

एकसालमात्रभेदनेऽस्य वालिसाम्यशङ्का जायेत तन्निवृत्त्यर्थमनुक्तानामपि सा ( रसात ) लगिरिप्रस्थादीनां भेदनमिति मन्तव्यम् ॥ ६६ ॥

**ततः प्रीतमनास्तेन विश्वस्तः स महाकपिः ।**
**किष्किन्धां रामसहितो जगाम च गुहां तदा ॥ ६७ ॥**

❀ अभिनव-राजलक्ष्मीः ❀

[ अन्वयः ] ततः तेन विश्वस्तः प्रीतमनाः स महाकपिः रामसहितः तदा किष्किन्धां गुहां जगाम ।

[ विग्रहः ] प्रीतं मनो यस्यासौ-प्रीतमनाः । महांश्चासौ कपिश्च-महाकपिः । रामेण सहितो—रामसहितः ।

**[ अर्थः ] ततः=तदनन्तरं, तेन=तालभेदनादिना, विश्वस्तः= जातविश्वासः, प्रीतमनाः = प्रसन्नचेताः, स महाकपिः=सुग्रीवो वानरश्रेष्ठः, रामसहितः = रामेण सह, तदा = तस्मिन्नवसरे, किष्किन्धां गुहां, = किष्किन्धाख्यां गुहाम्, जगाम = अगच्छत् ।**

**[ वाच्यप० ] सुग्रीवेण किष्किन्धा जग्मे ।**

[ भाषा ] तब सुग्रीव रामजी के साथ किष्किन्धा को चला ॥ ६७ ॥

❀ तिलकः ❀

**तत इति**—ततः सालभेदान्तरं तेनातिदुष्करेण कर्मणा वालिवधे विश्वासं प्राप्तः प्रीतमनाः=कपिराज्यलाभोऽचिरादेवेति—सन्तुष्टमनाः महाकपिः = सुग्रीवः किष्किन्धाख्यां गुहां रामसहितो जगाम ॥ ६७ ॥

**ततोऽगर्जद्धरिवरः सुग्रीवो हेमपिङ्गलः ।**
**तेन नादेन महता निर्जगाम हरीश्वरः ॥ ६८ ॥**

❀ अभिनव-राजलक्ष्मीः ❀

[ अन्वयः ] ततः हेमपिङ्गलः हरिवरः सुग्रीवः अगर्जत् । महता तेन नादेन हरीश्वरः निर्जगाम ।

[ समासः ] हरिषु वरः—हरिवरः । हेम इव पिङ्गलः—हेम-पिङ्गलः । हरीणामीश्वरः–हरीश्वरः ।

[ अर्थः ] ततः = किष्किन्धागमनानन्तरं, हेमपिङ्गलः = सुवर्णसुन्दरवपुः, हरिवरः = वानरश्रेष्ठः, सुग्रीवः—अगर्जत् = जगर्ज । तेन महता नादेन = तेन सुग्रीवगर्जनेन, हरीश्वरः = वानरराजो वाली, निर्जगाम = निर्गतः ।

[ वाच्यपः ] सुग्रीवेण अगर्ज्यत । हरीश्वरेण निर्जग्मे ।

[ भाषा ] तब वहाँ जाकर सुग्रीव बड़े जार से गर्जने लगा ॥ ६८ ॥

❀ तिलकः ❀

तत इति—हरिवरः कपिश्रेष्ठोऽगर्जत्सिंहनादं कृतवान् । हरीश्वरो वाली ॥ ६८ ॥

**अनुमान्य तदा तारां सुग्रीवेण समागतः ।**
**निजघान च तत्रैनं शरेणैकेन राघवः ॥ ६९ ॥**

❀ अभिनव-राजलक्ष्मीः ❀

[ अन्वयः ] तदा ताराम् अनुमान्य सुग्रीवेण समागतः । तत्र एकेन शरेण एनं निजघान ।

[ अर्थः ] तदा = तस्मिन् काले, तारां = स्वभार्याम्, अनुमान्य = [तदनुमतिं गृहीत्वा] तां तोषयित्वा, वाली—सुग्रीवेण = स्वभ्रात्रा, समागतः = युयुधे । तत्र = युद्धे, राघवः—एकेन शरेण = एकेनैव बाणेन, एनं = वालिनं, निजघान = हतवान् ।

[ वाच्यप० ] राघवेणायं निजघ्ने ।

[ भाषा ] तारा को किसी तरह समझा बुझा कर वाली सुग्रीव से आकर भिड गया । और जब सुग्रीव को कमजोर होते देखा तब रामजी ने १ही बाण से वाली को मार डाला ॥ ६९ ॥

❀ तिलकः ❀

**अन्विति**—तदाङ्गदमुखादवगतसुग्रीवराममित्रत्वेन संयुगनिर्गमनं वारयन्तीं तारां स्वस्त्रियं मयाऽकृतापकारो धर्मज्ञो रामो मह्यं नापकरिष्यतीत्यादिवचनैरनुमान्यानुमतिं प्रापय्य। कृतानुमतिकां कृत्वेति यावत्। सुग्रीवेण सह वाली युद्धाय समागतोऽभवत्। तत्र संयुगे। एनं वालिनम्॥६९॥

**ततः सुग्रीववचनाद्धत्वा वालिनमाहवे।**
**सुग्रीवमेव तद्राज्ये राघवः प्रत्यपादयत्॥ ७०॥**

❀ अभिनव-राजलक्ष्मीः ❀

[ अन्वयः ] ततः सुग्रीववचनात् बालिनम् आहवे हत्वा राघवः–तद्राज्ये सुग्रीवमेव प्रत्यपादयत्।

[ विग्रहः ] सुग्रीवस्य वचनं–सुग्रीववचनं, तस्मात्। तस्य राज्यं–तद्राज्यं, तस्मिन्।

**[ अर्थः ] ततः = तदनन्तरं, सुग्रीववचनात् = सुग्रीवप्रार्थनया–बालिनं = वानरराजम्, आहवे = युद्धे, हत्वा = निहत्य, राघवः = रामः, तद्राज्ये = किष्किन्धाराज्ये, सुग्रीवमेव प्रत्यपादयत् = स्थापयामास।**

[ भाषा ] बाली को मार सुग्रीव को ही रामचन्द्रजी ने राज्य दिया ॥७०॥

❀ तिलकः ❀

**ततइति**—सुग्रीववचनात् 'वालिनं जहि काकुत्स्थ मया बद्धोऽयमञ्जलिः' इत्येवंरूपात्सुग्रीववचनात्। आहवे रणे। प्रत्यपादयत्प्रतिष्ठापितवान्। सुग्रीववचनादित्यनेनानपकारिवालिवधस्यायुक्तत्वेऽपि मित्रापकारित्वेन तदुक्त्या हननमिति ध्वनितम्॥ ७०॥

**स च सर्वान् समानीय वानरान् वानरर्षभः।**
**दिशः प्रस्थापयामास दिदृक्षुर्जनकात्मजाम्॥ ७१॥**

❀ अभिनव-राजलक्ष्मीः ❀

[ अन्वयः ] स वानरर्षभश्च जनकात्मजां दिदृक्षुः सर्वान् वानरान् समानीय दिशः प्रस्थापयामास ।

[ विग्रहः ] वानरः ऋषभ इव–वानरर्षभः । द्रष्टुमिच्छुः–दिदृक्षुः । जनकस्यात्मजा जनकात्मजा, ताम् ।

**[ अर्थः ] स वानरर्षभः = स वानरराजः सुग्रीवः, जनकात्मजां = सीतां, दिदृक्षुः = अन्वेष्टुमिच्छन्, सर्वान् = निखिलान्, वानरान् = कपीन्, समानीय = आहूय, दिशः = दिक्षु, प्रस्थापयामास = प्राहिणोत् ।**

**[ वाच्यप० ] सुग्रीवेण वानराः प्रस्थापयाञ्चक्रिरे ।**

[ भाषा ] सीता का पता लगाने वानरों को सुग्रीव ने भेजा ॥७१॥

❀ तिलकः ❀

**स चेति**—स सुग्रीवः । दिदृक्षुरन्वेषिषुः सर्वान्वानरान्समानीय सर्वा दिशः प्रस्थापयामास ॥ ७१ ॥

**ततो गृध्रस्य वचनात् सम्पातेर्हनुमान् बली ।**
**शतयोजनविस्तीर्णं पुप्लुवे लवणार्णवम् ॥ ७२ ॥**

❀ अभिनव-राजलक्ष्मीः ❀

[ अन्वयः ] ततः बली हनूमान् सम्पातेः गृध्रस्य वचनात् शतयोजनविस्तीर्णं लवणार्णवं पुप्लुवे ।

[ विग्रहः ] शतयोजनं विस्तीर्णः–शतयोजनविस्तीर्णः तं–। लवणस्य अर्णवः–लवणार्णवः, तम् ।

**[ अर्थः ] ततः = तदनन्तरं, बली = महापराक्रमः, हनुमान् = मारुतिः, सम्पातेः गृध्रस्य = सम्पातिनाम्नो गृध्रस्य, वचनात् =**

वाक्यात्, शतयोजनविस्तीर्णं = शतयोजनायतं, लवणार्णवं = लवणसागरं, पुप्लुवे = लङ्घितवान् ।

[ वाच्यप० ] हनुमता लवणार्णवः पुप्लुवे ।

[ भाषा ] तब सम्पाति ( जटायु के बड़े भाई ) के कहने से सीता को लङ्का में जानकर हनूमान् जी ४०० कोश चौड़े समुद्र को डांक गये ॥७२॥

❀ तिलकः ❀

तत इति—गृध्रस्य सम्पातेर्वचनात् 'तस्यां वसति वैदेही दीना कौशेयवासिनी' इत्येवंरूपात् । पुप्लुवे उल्लङ्घितवान् ।

इतः सुन्दरकाण्डकथासङ्ग्रहः ॥ ७२ ॥

**तत्र लङ्कां समासाद्य पुरीं रावणपालिताम् ।**
**ददर्श सीतां ध्यायन्तीमशोकवनिकागताम् ॥ ७३ ॥**

❀ अभिनव-राजलक्ष्मीः ❀

[ अन्वयः ] तत्र रावणपालितां लङ्कां पुरीं समासाद्य अशोकवनिकागतां ध्यायन्तीं सीतां ददर्श ।

[ अन्वयः ] रावणेन पालिता—रावणपालिता,तां । अशोकानां वनी, अशोकवनी, सैव—अशोकवनिका, तां गता—तां ।

[ अर्थः ] तत्र = लवणसमुद्रस्य, परतीरे, रावणपालितां = रावणरक्षितां, लङ्कां पुरीं = लङ्काख्यां नगरीं, समासाद्य = प्राप्य, अशोकवनिकागताम् = अशोकवाटिकान्तरमाश्रितां, ध्यायन्तीं = ध्यानपरायणां, सीतां = जानकीं, ददर्श = अपश्यत् ।

] वाच्यप० ] सीता ददृशे ।

[ भाषा ] लङ्का की अशोकवनिका में हनुमान्जी ने सीता को देखा ॥७३॥

❀ तिलकः ❀

तत्रेति—अशोकवनिकां गतां प्रमदवनस्थितां ध्यायन्तीम् । राममिति शेषः ॥ ७३ ॥

**निवेदयित्वाभिज्ञानं प्रवृत्तिं विनिवेद्य च ।**
**समाश्वास्य च वैदेहीं मर्दयामास तोरणम् ॥ ७४ ॥**

❀ अभिनव-राजलक्ष्मीः ❀

[ अन्वयः ] अभिज्ञानं निवेदयित्वा, प्रवृत्तिं विनिवेद्य च, वैदेहीं समाश्वास्य च तोरणं मर्दयामास ।

[ अर्थः ] अभिज्ञानम् = विश्वासजनकं रामाङ्गुलीयकं, निवेदयित्वा । [ आर्षः ल्यबभावः ] = कथयित्वा, प्रवृत्तिं = वार्त्तां, "वार्त्ता प्रवृत्तिर्वृत्तान्त" इत्यमरः । विनिवेद्य च = यथावदुक्त्वा च, वैदेहीं = जानकीं, समाश्वास्य च = तोषयित्वा च, तोरणं = लङ्काबहिर्द्वारं, "तोरणोऽस्त्री बहिर्द्वार" मित्यमरः । मर्दयामास = बभञ्ज ।

[ वाच्यप० ] हनूमता तोरणो मर्दितः ।

[ भाषा ] सीता को रामजी की अंगूठी दे–सब हाल कह, उसे धीरज दे, हनूमानजी ने लंका का दर्वाजा तोड डाला ॥ ७४ ॥

❀ तिलकः ❀

**निवेदयित्वेति**—अभिज्ञानमङ्गुलीयकरूपम् । प्रवृत्तिं रामसुग्रीवसख्यादिसर्ववृत्तान्तम् । समाश्वास्य रावणस्य सर्वोऽपि व्यापारस्त्वत्प्रत्यापत्त्येकफलक इत्यादितत्त्वकथनेन वैदेहीं समाश्वास्य । 'गृहीत्वा प्रत्यभिज्ञानम्' इति पाठे प्रत्यभिज्ञानं सीतालकस्थितचूडामणिरूपम् । तोरणमशोकवनिकागतप्रासादबहिर्द्वारसन्निवेशम् । चकारादशोकवनं च मर्दयामास ॥ ७४ ॥

**पञ्च सेनाग्रगान् हत्वा सप्त मन्त्रिसुतानपि ।**
**शूरमक्षं च निष्पिष्य ग्रहणं समुपागमत् ॥ ७५ ॥**

❀ अभिनव-राजलक्ष्मीः ❀

[ अन्वयः ] पञ्च सेनाग्रगान् हत्वा सप्त मन्त्रिसुतानपि हत्त्वा, शूरम् अक्षं च निष्पिष्य—गृहणं समुपागमत्। [ अग्रिमश्लोकेन ७६ सहैवान्वेति ]।

[ विग्रहः ] सेनाया अग्रे गच्छन्तीति—सेनाग्रगाः, तान्। मन्त्रिणां सुताः—मन्त्रिसुताः, तान्।

[ अर्थः ] **पञ्च सेनाग्रगान् = रावणस्य सेनापतीन् पञ्च, हत्त्वा = निहत्य, सप्त मन्त्रिसुतानपि = सप्तसंख्याकान् अमात्यपुत्रानपि, हत्त्वा = मारयित्वा, शूरं = महाबलम्, अक्षं = रावणकुमारम्—अक्षं, निष्पिष्य = पिष्ट्वा, [ हनूमान् ] गृहणं = बन्धनं, समुपागमत् = प्राप।**

[ वाच्यप० ] **बन्धनं हनूमता समुपागम्यत।**

[ भाषा ] हनूमानजी ने पांच सेनापतियों को, सात मन्त्रिपुत्रों को और रावण पुत्र अक्ष को मार डाला। तब अपनी इच्छा से बन्ध गए ॥७५॥

❀ तिलकः ❀

**पञ्चेति**—सेनाग्रगाः = सैन्यपतयः पिङ्गलनेत्रप्रभृतयः, मन्त्रिसुता जम्बुमाल्यादयः। अक्षं = रावणसुतं, निष्पिष्य = चूर्णीकृत्य, ग्रहणमिन्द्रजित्प्रयुक्तब्रह्मास्त्रकृतबन्धनं, समुपागमत्प्राप्तः ॥ ७५ ॥

**अस्त्रेणोन्मुक्तमात्मानं ज्ञात्वा पैतामहाद् वरात्।**
**मर्षयन् राक्षसान्वीरो यन्त्रिणस्तान् यदृच्छया ॥७६॥**

❀ अभिनव-राजलक्ष्मीः ❀

[ अन्वयः ] वीरः पैतामहात् वरात् आत्मानम् अस्त्रेण उन्मुक्तं ज्ञात्वा यन्त्रिणः तान् राक्षसान् मर्षयन् यदृच्छया—[ 'ग्रहणं समुपागम'दिति पूर्व ७५ श्लोकेनान्वयः ]।

[ विग्रहः ] पितामहस्येदं, पैतामहं, तस्मात् ।

[ अर्थः ] वीरः = वीर्यशाली हनूमान्, पैतामहात् वरात् = ब्रह्मदत्ताद्वरप्रभावात्, आत्मानं=स्वशरीरम्, अस्त्रेण=ब्रह्मास्त्रेण, उन्मुक्तं=परित्यक्तं, ज्ञात्वा = विज्ञाय, यन्त्रिणः = पीडयतः बन्धनकारकान्, तान् राक्षसान् = निशाचरान्, मर्षयन् = सहमानः, यदृच्छया = स्वेच्छयैव रावणदर्शनलोभेन, [ ग्रहणं = बन्धनं, समुपागमत् = जगामेत्यर्थः । ]

[ भाषा ] ब्रह्माजी के वरदान से ब्रह्मास्त्र से छूटकर भी हनूमानजी नें बांधते हुए राक्षसों को कुछ भी नहीं कहा, और चुपचाप बंध गए ॥ ७६ ॥

❀ तिलकः ❀

अस्त्रेणेति—'मदस्त्रस्यामोघत्वात्तेन बन्धनमात्रं, चतुष्पञ्चघटिकानन्तरं पुनर्मोक्षश्चे'ति ब्रह्मदत्तवरात् । तावता कालेन ब्रह्मास्त्रमुक्तमात्मानं ज्ञात्वापि यदृच्छया = कार्यान्तरप्रसङ्गेन रावणदर्शनापेक्षया । यन्त्रिणो = बद्ध्वा नेतृंस्तान्राक्षसान्प्रति वीरो हन्तुं समर्थोऽपि मर्षयन्क्षमां कुर्वन् । रावणसमीप प्राप्तवानिति शेषः । 'ममर्ष' इति वा पाठः ॥ ७६ ॥

**ततो दग्ध्वा पुरीं लङ्कामृते सीतां च मैथिलीम् ।**
**रामाय प्रियमाख्यातुं पुनरायान् महाकपिः ॥७७॥**

❀ अभिनव-राजलक्ष्मीः ❀

[ अन्वयः ] ततः महाकपिः—मैथिलीं सीताम् ऋते—लङ्कां पुरीं दग्ध्वा च—रामाय प्रियम् आख्यातुं पुनः आयात् ।

[ विग्रहः ] महांश्चासौ कपिश्च—महाकपिः ।

[ अर्थः ] ततः = बन्धनानन्तरं, महाकपिः = कपिश्रेष्ठः—हनुमान्, मैथिलीं = विदेहात्मजां, सीताम्—ऋते = विना, तां विहायेत्यर्थः, । लङ्कां पुरीं = लङ्कानगरीं, दग्ध्वा च = भस्मीकृत्य च,

रामाय = राघवाय, प्रियं = सीतावृत्तान्तम्, आख्यातुं = कथयितुं, पुनः = भूयः, आयात् = ऋष्यमूकगिरिमाजगाम ।

[ वाच्यप. ] महाकपिना पुनरायायत ।

[भाषा] लङ्का को जलाकर हनुमान् जी रामचन्द्रजी के पास आए ॥७७॥

❀ तिलकः ❀

तत इति—ततो रावणदर्शनादिव्यापारानन्तरं, सीतामृते=सीतावस्थानप्रदेशं विना, लङ्कां दग्ध्वा रामाय प्रियं=सीतादर्शनरूपप्रियवार्तामाख्यातुं पुना रामान्तिकं महाकपिर्हनुमानायादागतः ॥ ७७ ॥

सोऽभिगम्य महात्मानं कृत्वा रामं प्रदक्षिणम् ।
न्यवेदयदमेयात्मा दृष्टा सीतेति तत्त्वतः ॥७८॥

❀ अभिनव-राजलक्ष्मीः ❀

[ अन्वयः ] अमेयात्मा सः महात्मानं राममभिगम्य प्रदक्षिणं कृत्वा "सीता दृष्टा"–इति तत्त्वतः न्यवेदयत् ।

[ विग्रहः ] अमेय आत्मा यस्य सः–अमेयात्मा ।

[ अर्थः ] अमेयात्मा = महात्मा, महात्मानं = भगवन्तं, रामं = रामचन्द्रम्, अभिगम्य = प्राप्य, प्रदक्षिणं कृत्वा = परिक्रम्य, सीता दृष्टा = मया सीता विलोकिता, इति = इत्युक्त्वा, तत्त्वतः = विस्तरेण, न्यवेदत् = निवेदितवान् ।

[ वाच्यप. ] तेन न्यवेद्यत ।

[ भाषा ] श्रीहनूमानजी ने श्रीरामजी से सीता का हाल कहा ॥ ७८ ॥

❀ तिलकः ❀

सोऽभीति–प्रदक्षिणं प्रदक्षिणादिमुख्यमुपचारम् । महात्मानं=परमात्मानम् । अमेयात्माऽपरिच्छेद्यबलबुद्धिधैर्यादिवैभवः । तत्त्वतः – सार्वविभक्तिकस्तसिः, दृष्टा सीतेति तत्त्वं न्यवेदयदित्यर्थः । अत्र दृष्टेति पदस्य प्रथमप्रयोगो रामस्य सीतेति श्रवणे तद्विषयक्रियापदसंशयो माभूदित्यर्थः ॥७८॥

**ततः सुग्रीवसहितो गत्वा तीरं महोदधेः ।**
**समुद्रं क्षोभयामास शरैरादित्यसन्निभैः ॥७९॥**

❀ अभिनव-राजलक्ष्मीः ❀

[ अन्वयः ] ततः सुग्रीवसहितः रामः महोदधेः तीरं गत्वा आदित्यसन्निभैः शरैः समुद्रं क्षोभयामास ।

[ विग्रहः ] सुग्रीवेण सहितः–सुग्रीवसहितः । आदित्येन सन्निभाः–आदित्यसन्निभाः, तैः—।

[ अर्थः ] ततः = सीतावृत्तान्तज्ञानानन्तरं, सुग्रीवसहितः = वानरराजसहितः, रामः = राघवः, महोदधेः = लवणार्णवस्य, तीरं = तटं, गत्वा = प्राप्य, आदित्यसन्निभैः = सूर्यसदृशैः— "सदृशः सन्निभः समः" इति कोशः । शरैः = बाणैः, समुद्रं = सागरं, क्षोभयामास = व्याकुलोचकार ।

[ वाच्यप. ] रामेण समुद्रः क्षोभयाञ्चक्रे ।

[ भाषा ] रामजी समुद्र पर आए, और समुद्र से रास्ता मांगा ॥७९॥

❀ तिलकः ❀

तत इति—अतो-युद्धकाण्डकथासङ्ग्रहः । क्षोभयामास । लङ्कागमनमार्गदान औदासीन्यात्समुद्रमापातालमाकुलीचकारेत्यर्थः ॥ ७९ ॥

**दर्शयामास चात्मानं समुद्रः सरितां पतिः ।**
**समुद्रवचनाच्चैव नलः सेतुमकारयत् ॥८०॥**

❀ अभिनव-राजलक्ष्मीः ❀

[ अन्वयः ] सरितां पतिः समुद्रः आत्मानं दर्शयामास च ।
समुद्रवचनाच्चैव नलः सेतुम् अकारयत्

[ अर्थः ] सरितां = नदीनां, पतिः = नाथः, समुद्रः = सागरः, आत्मानं = स्वं वपुः, दर्शयामास = रामस्य प्रत्यक्षं

दर्शनं ददौ। समुद्रवचनाच्चैव = समुद्रवाक्येन, ( समुद्रोपदिष्टमार्गेण ) नलः = तन्नामा वानरः, सेतुं = आलिं "सेतुरालौ स्त्रियां पुमान्" इत्यमरः। अकारयत् = चकार।

[ वाच्यप. ] समुद्रेण आत्मा दर्शितः। नलेन सेतुरकार्यत।

[ भाषा ] तब समुद्र ने स्वयं दर्शन दे कहा कि नल से पुल बनवा कर पार जाइए। तब नल ने समुद्र पर पुल बनाया ॥ ८० ॥

❀ तिलकः ❀

दर्शयामासेति—समुद्रः—शरक्षोभित इति शेषः। समुद्रवचनात् = 'एष सेतुं महोत्साहः करोतु मयि वानरः। तमहं धारयिष्यामि' इत्येवंरूपान्नलं सेतुमकारयत्। नलेन सेतुं कारितवानित्यर्थः ॥ ८० ॥

तेन गत्वा पुरीं लङ्कां हत्वा रावणमाहवे ॥
रामः सीतामनुप्राप्य परां व्रीडामुपागमत् ॥ ८१ ॥

❀ अभिनव-राजलक्ष्मीः ❀

[ अन्वयः ] रामः तेन लङ्कां पुरीं गत्वा, आहवे रावणं हत्वा सीताम् प्राप्य अनु [1]परां व्रीडाम् उपागमत्।

[ अर्थः ] रामः तेन = स्वकारितेन सेतुना, लङ्कापुरीं-गत्वा = प्राप्य, आहवे = युद्धे, रावणं = राक्षसराजं, हत्वा = नाशयित्वा, सीतां = जानकीं, प्राप्य = लब्ध्वा, अनु = पश्चात्, परां[1] = महतीं, लज्जां = व्रीडाम्, उपागमत् = प्राप, परगृहस्थितां सीतां कथं स्वीकरोमीति लज्जां जगामेति भावः।

[ वाच्यप. ] तेन व्रीडोपागम्यत।

---

१ परां = लक्ष्म्यादिश्रेष्ठां सीतामनुप्राप्य = सम्यक् स्वीकृत्य, — व्रीडां = "वानरसाहाय्येन स्वपत्नीं प्राप्तवान् राम" इति लोकापवादाशंकया लज्जाभासं प्राप—इत्यर्थं तु शिरोमणिराह। "कथमियं मयि वीरशिरोमणौ विद्यमाने क्लेशमनुबभूवे"ति लज्जित इति तु **गौडाः**।

[ भाषा ] रामजी ने पुल से समुद्र को पार किया, रावण को मारा और सीता को प्राप्त किया। और सीता को देख कुछ लज्जित हुए ॥८१॥

❀ तिलकः ❀

तेनेति—तेन = सेतुना। आहवे युद्धे। अत्र क्वचिन्मध्ये 'अभ्यषिञ्चत्' इत्यादिश्लोकद्वयम्—'अभ्यषिञ्चत्स लङ्कायां राक्षसेन्द्रं विभीषणम्। कर्मणा तेन महता देवा इन्द्रपुरोगमाः॥ सदेवर्षिगणास्तुष्टा राघवं तेऽभ्यपूजयन्। तथा परमसन्तुष्टैः पूजितः सर्वदैवतैः॥' लङ्कायां राज्ये राक्षसेन्द्रं तत्त्वव्यवहारविषयो भवति यथा तथाऽभ्यषिञ्चत्। तेन कर्मणा रावणहननादिरूपेण। सदेवर्षिगणा देवर्षिसहिता गणाः। अर्थादृषिगणास्तत्सहिता देवा इत्यर्थः। तदिदं श्लोकद्वयम्। 'पूजितः सर्वदैवतैः। अभिषिच्य च' इत्यनेन पुनरुक्तमिति प्रक्षिप्तमेव बोध्यम्। सीतां प्राप्यानु पश्चात्परां व्रीडां रक्षोगृहे चिरोषितां पुनर्गृहीतवानिति लोकापवादशङ्कयातिशयितां लज्जामुपागमत् ॥८१॥

**तामुवाच ततो रामः परुषं जनसंसदि।**
**अमृष्यमाणा सा सीता विवेश ज्वलनं सती ॥ ८२ ॥**

❀ अभिनव-राजलक्ष्मीः ❀

[ अन्वयः ] ततः जनसंसदि रामः तां परुषम् उवाच, सा सती सीता अमृष्यमाणा सती-ज्वलनं विवेश।

[ विग्रहः ] जनानां संसत्-जनसंसत्, तस्यां—।

[ अर्थः ] ततः = जनापवादभयात्, जनसंसदि = वानरादिसभामध्ये, रामः—सीतां, परुषं = मर्माविधं क्रूरं वाक्यम्, उवाच = जगाद। [ अकथितंचेति द्विकर्मकता ]। सा-सती = पतिव्रता, सीता = जानकी, अमृष्यमाणा = असहमाना, ज्वलनं = पावकं, विवेश = प्रविवेश। [वाच्यप.] तया पावकः प्रविविशे।

[ भाषा ] सबके सामने ही रामजी ने सीता को कठोर २ वचन कहे, जिससे सीता ने लक्ष्मण से अग्नि मंगाकर उसमें प्रवेश किया ॥ ८२ ॥

❀ तिलकः ❀

तामिति—जनसंसदि वानरराक्षससभायां परुषं=मर्मस्पृक्। 'दीपो नेत्रातुरस्येव प्रतिकूलासि मे दृढम्' इत्यादिवचनमुवाच। लोकस्य नास्यां रामस्य कामादिदोषतः पुनर्जिघृक्षास्तीति प्रत्यायनार्थम्। अमृष्यमाणा पातिव्रत्यसंशयजनितमुक्तवचनम्। सतीत्यनेन पातिव्रत्यबलान्निजेच्छयाग्नि-प्रादुर्भावनशक्तिमत्त्वद्योतमिति केचित्। लक्ष्मणप्रादुर्भावितो ज्वलन इत्यन्ये ८२

ततोऽग्निवचनात् सीतां ज्ञात्वा विगतकल्मषाम्।
कर्मणा तेन महता त्रैलोक्यं सचराचरम्॥ ८३॥
सदेवर्षिगणं तुष्टं राघवस्य महात्मनः।
बभौ रामः संप्रहृष्टः पूजितः सर्वदैवतैः॥ ८४॥

❀ अभिनव-राजलक्ष्मीः ❀

[ अन्वयः ] ततः अग्निवचनात् सीतां विगतकल्मषां ज्ञात्वा [ रामः स्वीचकारेति शेषः[1]। ] महात्मनः रामस्य महता तेन कर्मणा सदेवर्षिगणं सचराचरं त्रैलोक्यं तुष्टम्। सर्वदैवतैः पूजितः संप्रहृष्टः रामो बभौ।

[ विग्रहः ] अग्नेः वचनम्—अग्निवचनं, तस्मात्। विगतं कल्मषं यस्याः सा—विगतकल्मषा, तां। त्रयाणां लोकानां समाहारः त्रिलोकी, त्रिलोक्येव—त्रैलोक्यम्। चराश्च—अचराश्च—चराचराः, तैः सहितं-सचराचरम्। देवाश्च ऋषयश्च—देवर्षयः, तेषां गणः, देवर्षिगणः, तेन सह—इति—सदेवर्षिगणम्। सर्वाणि दैवतानि—तैः।

---

१ गोविन्दाचार्यस्तु—"ततोऽग्निवचनात्सीतां ज्ञात्वा विगतकल्मषाम्। बभौ रामः सम्प्रहृष्टः पूजितः सर्वदैवतैः॥ ८३॥ कर्मणा तेन महता त्रैलोक्यं सचराचरं। सदेवर्षिगणं तुष्टम्॥ ८४॥ अभिषिच्य च—॥ ८५॥—इतिक्रमं मन्वते। शोभनश्चायं पन्था इति गौडाः।

[ अर्थः ] ततः = अग्निप्रवेशानन्तरम्, अग्निवचनात् = पावकवाक्यात्, सीतां-विगतकल्मषां = पापसम्पर्कशून्यां-"पापं किल्बिषकल्मष"मित्यमरः । ज्ञात्वा = विदित्वा-लोकान् बोधयित्वा च, [ तां स्वीचकारेति शेषः ] । महात्मनः = लोकमर्यादापालकस्य-धीरस्य, रामस्य-महता = उत्कृष्टेन, तेन कर्मणा = रावणवधादि-सीतापरीक्षान्तकर्मणा, सदेवर्षिगणं = देवमहर्षिगणसहितं, सचराचरं = स्थावरजङ्गमसहितं, त्रैलोक्यं = स्वर्गभूतल-पातालात्मकं, तुष्टम् = तुतोष । [ स्थावरस्य तोषः— पत्रपुष्पाद्याविर्भावादवगतः-'अन्तः संज्ञा भवन्त्येते' इति विष्णुपुराणात् ] सर्वदैवतैः = सकलैः सुरैः, "दैवतानि पुंसि वा देवताः" इत्यमरः । पूजितः = सत्कृतः, अत एव संप्रहृष्टः = प्रमुदितः, रामः-बभौ = शुशुभे ॥

[ वाच्यप० ] त्रैलोक्येनातोषि । रामेण बभे ।

[भाषा] रामजी के अद्भुत कामों से प्राणिमात्र को हर्ष हुआ ॥८३।८४॥

❀ तिलकः ❀

**तत इति**—अग्निवचनात् 'विशुद्धभावां निष्पापां प्रतिगृह्णीष्व राघव' इत्येवंरूपात् । विगतकल्मषां = निष्पापां स्वयं ज्ञात्वा लोकस्य च तथात्वं प्रत्याय्य । सीतामङ्गीचकारेति शेषः । क्वचितु 'अग्रहीदमलां रामो वचनाच्च गुरोस्तदा' इति पठ्यते । तत्रामलामिति पुनरुक्तमापद्यते ॥ ८३ ॥

**सदेवर्षिति**—तेन कर्मणा सीताप्रत्यानयनान्तेन कर्मणा । ऋषिदेवगणसहितचराचरप्रजासहितं त्रैलोक्यं तुष्टं तुतोष । तत्सन्तोषेण च प्रहृष्टसन्तोषवशादेव सर्वदैवतैः पूजितश्च रामो बभौ । अत्र केचिदचराणां वृक्षादीनां रावणकृतपीडापरिज्ञानाभावेन रावणवधजन्यसन्तोषाभावादेवं व्याचक्षते—'देवऋषिगणम्' इति पाठः । "ऋत्यकः" इति प्रकृतिभावः । तत्र देवगणा इन्द्रादयः, ऋषिगणा विश्वामित्रादयः । एतद्रूपं यत् त्रैलोक्यं सचरा-

चरम् । अत्र चरप्रजा गतिभक्षणमात्रप्रधानास्तिर्यक्स्रोतसः पशुपक्ष्यादय ऐरावतादयः । अचरप्रजाश्चरप्रजाभिन्नाज्ञानयुक्तप्रजा अर्वाक्स्रोतसो मनुष्याः। एवं च स्वस्वशेषतिर्यगर्वाक्स्रोतोयुतं देवर्षिगणरूपं त्रैलोक्यं तुष्टम् ! रावणस्य मर्त्योपेक्षित्वात्प्राधान्येन देवर्षिग्रहणमित्याहुः ॥ ८४ ॥

**अभिषिच्य च लङ्कायां राक्षसेन्द्रं विभीषणम् ।**
**कृतकृत्यस्तदा रामो विज्वरः प्रमुमोद ह ॥ ८५ ॥**

❀ अभिनव-राजलक्ष्मीः ❀

[ अन्वयः ] तदा—लङ्कायां राक्षसेन्द्रं विभीषणं च अभिषिच्य,—कृतकृत्यः रामः विज्वरः प्रमुमोद ह ।

[ विग्रहः ] राक्षसानामिन्द्रः—राक्षसेन्द्रः, तम् । कृतं कृत्यं येनासौ—कृतकृत्यः । विभीषयतीति विभीषणः तं—विगतो ज्वरो यस्यासौ—विज्वरः ।

[ अर्थः ] तदा = रावणवधानन्तरं, [ सीतादर्शनात्प्राक्-[1] ] लङ्कायां-राक्षसेन्द्रं = राक्षसेश्वरं, विभीषणं = तन्नामानं रावणानुजम्, अभिषिच्य = राज्ये संस्थाप्य च, कृतकृत्यः = सम्पन्नसकलकार्यः, विज्वरः = विगतचिन्तः सन्, प्रमुमोद ह = प्रमुमुदे खलु । [ छान्दसं परस्मैपदं ] । हेति प्रसिद्धौ ।

[ वाच्यप. ] रामेण प्रमुमुदे ।

❀ तिलकः ❀

अभिषिच्येति—राक्षसेन्द्रं भावितत्वव्यवहारविषयम् । कृतकृत्यः प्राक्प्रतिज्ञातविभीषणाभिषेकलक्षणकृत्यस्यापि कृतत्वात् कृतकृत्यः । अत एव विज्वरो विगतावश्यकर्तव्यविषयचिन्तातापः । प्रमुमोदेति च्छान्दसं परस्मैपदम् ॥ ८५ ॥

---

१ सीतादर्शनात्पूर्वमेवाभिषेकेऽपि क्रमानादरेणोक्तिरत्रेति-गोविन्दराजः ।

**देवताभ्यो वरं प्राप्य समुत्थाप्य च वानरान् ।**
**अयोध्यां प्रस्थितो रामः पुष्पकेण सुहृद्वृतः ॥ ८६ ॥**

❀ अभिनव-राजलक्ष्मीः ❀

[ अन्वयः ] रामः देवताभ्यः वरं प्राप्य,—वानरान् समुत्थाप्य च, सुहृद्वृतः पुष्पकेण—अयोध्यां प्रस्थितः ।

[ विग्रहः ] सुहृद्भिः वृतः—सुहृद्वृतः ।

**[ अर्थः ] रामः—देवताभ्यः = रावणवधप्रसन्नेभ्य इन्द्रादिभ्यः, वरं = वरदानं, प्राप्य = लब्ध्वा, वानरान् = युद्धे हतान् कपीन्, उत्थाप्य = जीवयित्वा, च, सुहृद्वृतः = सुग्रीवादिसहितः, पुष्पकेण = तदाख्यविमानेन, अयोध्यां = स्वपुरीं प्रति, प्रस्थितः = जगाम ।**

[ भाषा ] देवताओं के आशीर्वाद से—मरे हुए सब बानर जी उठे, उन सबको साथ ले रामजी विमान से अयोध्या को चले ॥ ८६ ॥

❀ तिलकः ❀

**देवताभ्य इति**—'सुप्तोत्थितवदुत्तिष्ठन्तु वानरा' इत्येवंरूपं वरं रावणवधजनितहर्षवशात्स्वदिदृक्षया समागताभ्यो देवताभ्यः प्राप्य सुहृद्भिः सुग्रीवविभीषणादिभिः संवृतः पुष्पकेणायोध्यामुद्दिश्य प्रस्थितो जगाम ८६

**भरद्वाजाश्रमं गत्वा रामः सत्यपराक्रमः ।**
**भरतस्यान्तिके रामो हनूमन्तं व्यसर्जयत् ॥ ८७ ॥**

❀ अभिनव-राजलक्ष्मीः ❀

[ अन्वयः ] सत्यपराक्रमः रामः—भरद्वाजाश्रमं गत्वा भरतस्यान्तिके हनूमन्तं व्यसर्जयत् ।

[ विग्रहः ] भरद्वाजस्य आश्रमः—भरद्वाजाश्रमः,तं । सत्यः पराक्रमो यस्यासौ—सत्यपराक्रमः ।

[ अर्थः ] सत्यपराक्रमः = अमोघवीर्यः, रामः—भरद्वाजाश्रमं = भरद्वाजमुनेस्तपोवनं, गत्वा = प्राप्य, भरतस्य = स्वभ्रातुः, अन्तिके = समीपे, हनूमन्तं = मारुतिं, व्यसर्जयत् = व्यसृजत् ।

[ वाच्यप० ] रामेण हनूमान् व्यसर्ज्यत ।

[ भाषा ] पुष्पक द्वारा भरद्वाज के आश्रम को पहुँचकर रामजी नें भरत के पास हनूमानजी को भेजा ॥८७॥

❀ तिलकः ❀

भरद्वाजेति—'चतुर्दशे तु सम्पूर्णे वर्षेऽहनि रघूत्तम । न द्रक्ष्यामि यदि त्वां तु प्रवेक्ष्यामि हुताशनम्' इति भरतेन प्रतिज्ञातत्वाद्भरद्वाजाश्रमे चतुर्दशसमासमाप्त्यनन्तरं मुनिवचनेनैकदिनविलम्बस्य प्राप्तत्वात्स्वागमनप्रबोधनाय हनुमद्विसर्जनम् । यद्वा महत्या वानरसेनया सहाकस्माद्गमने भरतादेः शङ्का मा भूदिति तद्विसर्जनम् ॥ ८७ ॥

**पुनराख्यायिकां जल्पन् सुग्रीवसहितस्तदा ।**
**पुष्पकं तत्समारुह्य नन्दिग्रामं ययौ तदा ॥ ८८ ॥**

❀ अभिनव-राजलक्ष्मीः ❀

[ अन्वयः ] तदा–सुग्रीवसहितः पुनः तत् पुष्पकं समारुह्य आख्यायिकां जल्पन्–नन्दिग्रामं ययौ ।

[ अर्थः ] तदा = भरद्वाजाश्रमनिर्गमनवेलायां, सुग्रीवसहितः = सुग्रीवादिसहितः, पुनः = पुनरपि, पुष्पकं = विमानं, समारुह्य = उपविश्य, आख्यायिकां = पूर्ववृत्तं, भरतादिविषयकं, जल्पन् = पुनः पुनः कथयन् , नन्दिग्रामं = भरताश्रमं, ययौ = जगाम । [ वाच्यप० ] नन्दिग्रामो यये ।

[ भाषा ] भरद्वाजाश्रम से बाहर आ पुष्पक पर चढ़ कर रामजी नन्दिग्राम पहुँचे ॥ ८८ ॥

❀ तिलकः ❀

पुनरिति—पुष्पकादवतीर्णत्वात्पुनस्तत्पुष्पकं समारुह्य। आख्यायिकां=पूर्ववृत्तविषयां कथाम्। भरद्वाजाश्रमारोहात्पूर्वमिव जल्पन्कथयन्। सुग्रीवेति विभीषणादेरुपलक्षणम् ॥ ८८ ॥

**नन्दिग्रामे जटां हित्वा भ्रातृभिः सहितोऽनघः।**
**रामः सीतामनुप्राप्य राज्यं पुनरवाप्तवान् ॥ ८९ ॥**

❀ अभिनव-राजलक्ष्मीः ❀

[ अन्वयः ] अनघः रामः भ्रातृभिः सहितः नन्दिग्रामे जटां हित्वा, सीतामनु प्राप्य राज्यं प्राप्तवान्।

[ अर्थः ] नास्ति अघं यस्यासौ—अनघः = निष्पापः, "दुःखैनोव्यसनेष्वघ"मिति यादवः। रामः = राघवः, भ्रातृभिः = भरतलक्ष्मणशत्रुघ्नैः, सहितः = संयुतः, नन्दिग्रामे = भरताश्रमग्रामे, जटां = जटीभूतान् केशान्, हित्वा = दूरीकृत्य, सीतामनुप्राप्य= सीतां निकटे स्थापयित्वा, तया सहितः इति यावत्। राज्यम्= अयोध्याराज्यं, पुनः = मध्ये विच्छिन्नं भूयोऽपि, प्राप्तवान्=लेभे।

[ भाषा ] नन्दिग्राम में ही हजामत वगैरह कराकर वस्त्र आभूषण से सज्जित ( सीता सहित ) रामजी का अयोध्या में राज्याभिषेक हुआ ॥८९॥

❀ तिलकः ❀

नन्दिग्राम इति—नन्दिग्रामे भ्रातृभिः सह स्वस्यापि व्रतप्रयुक्तां जटां हित्वा त्यक्त्वा रामः सीतामनुप्राप्य मुनिवेषत्यागेन सीतानुरूपं रूपं प्राप्य। यद्वा मुनिवेषत्यागेन हृष्टां सीतां प्राप्य प्राप्तविसृष्टं राज्यं पुनरवाप्तवान् ॥ ८९ ॥

**प्रहृष्टमुदितो लोकस्तुष्टः पुष्टः सुधार्मिकः।**
**निरामयो ह्यरोगश्च दुर्भिक्षभयवर्जितः ॥ ९० ॥**

❀ अभिनव-राजलक्ष्मीः ❀

[अन्वयः] लोकः प्रहृष्टमुदितः तुष्टः पुष्टः सुधार्मिकः निरामयः अरोगः दुर्भिक्षभयवर्जितश्च [रामराज्ये भविष्यति–इति शेषः]

[विग्रहः] प्रहृष्टश्चासौ प्रमुदितश्च–प्रहृष्टप्रमुदितः । सुष्ठु धर्मः सुधर्मः, सुधर्मं चरति सुधार्मिकः। निर्गतः आमयो यस्मात्–असौ-निरामयः। नास्ति रोगो यस्यासौ–अरोगः। भिक्षाणां व्यृद्धिर्दुर्भिक्षं, दुर्भिक्षाद् भयं–दुर्भिक्षभयं, तेन वर्जितः = दुर्भिक्षभयवर्जितः ।

[ अर्थः ] लोकः = जनः, प्रहृष्टप्रमुदितः = पुत्रधनधान्यादिसम्पत्प्रमुदितचित्तः, तुष्टः = प्रीतः, पुष्टः = दारिद्र्य-कार्श्यरहितः, सुधार्मिकः = गुरुदेवराजभक्तिमान्, निरामयः = मानसपीडारहितः, अरोगः = शारीरिकव्याधिरहितः, आधि-व्याधिरहित इति यावत् । दुर्भिक्षभयवर्जितश्च=दुर्भिक्षादिभय-वर्जितश्च, आधिभौतिकाध्यात्मिकाधिदैविकविपद्रहित इति यावत्। [रामे राज्यं प्रशासति–भविष्यतीत्यर्थः। गोविन्द-राजस्तु–'आसीत्' इति शेषमाह । ]

[ भाषा ] रामजी के राज्यकाल में प्रजा को किसी प्रकार की पीड़ा, दुःख, दारिद्र्य आदि का भय नहीं रहा ॥ ९० ॥

❀ तिलकः ❀

एतदन्तं चरितं वृत्तत्वेनोपदिश्य देवर्षिरतः परमुत्तरकाण्डविषयं भविष्यत्वेनोपदिशति–**प्रहृष्टेति**। अनेन च रावणवधानन्तरं रामे राज्यं प्रशासति सति वाल्मीकेर्नारदं प्रति प्रश्न इति ज्ञायते । प्रहृष्टः प्रातिस्विकपुत्रपश्वादि-संपत्त्या मुदितः क्षोभराहित्येन मुदितान्तःकरणः । लोकः सर्वप्रजाः । तुष्टो बहुप्रदाद्भगवतः सांसारिकपारमार्थिकार्थलाभात्तुष्टः । अतएव पुष्टो दारिद्र्य-कार्श्यरहितः । आमयो मनसः पीडा । रोगो देहजो व्याधिः । दुर्भिक्षेण

१ दुर्भिक्षं च भयञ्च–दुर्भिक्षभये, ताभ्यां वर्जित इति तिलकसम्मतः समासः ।

चोरादिभयेन च रहितः—भविष्यतीति शेषः। यद्वा रामविरहेण दुःखितो राममेलनेन तुष्टः। तथा तद्विरहेण कृशस्तन्मेलनादेव पुष्टः ॥ ९० ॥

न पुत्रमरणं केचित् द्रक्ष्यन्ति पुरुषाः क्वचित्।
नार्यश्चाविधवा नित्यं भविष्यन्ति पतिव्रताः ॥ ९१ ॥

❀ अभिनव-राजलक्ष्मीः ❀

[ अन्वयः ] केचित् पुरुषाः क्वचित् पुत्रमरणं न द्रक्ष्यन्ति, नार्यश्च अविधवाः नित्यम् पतिव्रताः भविष्यन्ति।

[ विग्रहः ] पुत्राणां मरणं–पुत्रमरणं, तत्। विगता धवा यासां ताः–विधवाः, न विधवाः—अविधवाः।

[ अर्थः ] [ रामराज्ये– ] केचित् = केचिदपि, पुरुषाः = पुमांसः, क्वचित् = क्वचिदपि देशे काले वा, पुत्रमरणं = अपत्य-मरणं, न द्रक्ष्यन्ति = नानुभविष्यन्ति। नार्यश्च = स्त्रियश्च, अवि-धवाः = पतिवियोगरहिताः, नित्यं = सर्वदा, पतिव्रताः = पति-परायणाः साध्व्यः, भविष्यन्ति।

[वा०प०] पुत्रमरणं न द्रक्ष्यते, नारीभिरविधवाभिर्भविष्यते।

[ भाषा ] रामराज में–पुत्र वियोग, पतिवियोग किसी को नहीं होगा और स्त्रियाँ पतिव्रता होंगीं ॥ ९१ ॥

❀ तिलकः ❀

नेति—स्वपितृषु च जीवत्स्विति शेषः। अविधवाः = भर्त्रनुगमनाद्वंशपुत्रसद्भावाद्वेति शेषः ॥ ९१ ॥

न चाग्निजं भयं किञ्चिन्नाप्सु मज्जन्ति जन्तवः।
न वातजं भयं किञ्चिन्नापि ज्वरकृतं तथा ॥ ९२ ॥

❀ अभिनव-राजलक्ष्मीः ❀

[ अन्वयः ] अग्निजं किञ्चित् भयं न च, जन्तवः अप्सु न मज्जन्ति, वातजं किञ्चित् भयं न, तथा ज्वरकृतं अपि न।

[ विग्रहः ] अग्नेर्जातम्—अग्निजं, वाताज्जातं—वातजम् । ज्वरेण कृतं–ज्वरकृतम् ।

[ अर्थः ] अग्निजम् = अग्निहेतुकं, किञ्चित् = अल्पमपि, भयं = भीतिः, "भीतिर्भीः साध्वसं भय" मित्यमरः । नच = नैव भविष्यति । जन्तवः = प्राणिनः, अप्सु=जले, न मज्जन्ति = न निमज्ज्यन्ति । वातजं = झञ्झावातादिकृतं, किञ्चित् = किमपि, भयं न = न भविष्यति । एवञ्चाधिदैविकोपद्रवाभावः सूचितः । तथा = तथैव, ज्वरकृतं = सन्तापजनितं भयम्, अपि न = नैव भविष्यति [ आध्यात्मिकदुःखनिवृत्तिरनेनोक्ता ] ।

[ भाषा ] रामराज्य में अग्नि, जल, वायु से तथा ज्वर आदि से भी किसी को पीडा नहीं होगी ॥९२॥

❀ तिलकः ❀

न चाग्निजमिति—पादत्रयेणाधिदैविकदुःखनिवृत्तिरुच्यते । चतुर्थेनाध्यात्मिकनिवृत्तिः ॥ ९२ ॥

**न चापि क्षुद्भयं तत्र न तस्करभयं तथा ।**
**नगराणि च राष्ट्राणि धनधान्ययुतानि च ॥ ९३ ॥**

❀ अभिनव-राजलक्ष्मीः ❀

[ अन्वयः ] क्षुद्भयमपि तत्र न च, तथा तस्करभयं न । नगराणि च राष्ट्राणि धनधान्ययुतानि च [ भविष्यन्ति ]

[ विग्रहः ] क्षुदः भयं-क्षुद्भयम् । तस्करात् भयं, तस्करभयम्, धनानिश्च धान्यानि च, तैः युतानि धनधान्ययुतानि ।

[ अर्थः ] क्षुद्भयं = बुभुक्षाभयमपि, तत्र = रामराज्ये, न च = नैव भविष्यति । तथा = तथैव, तस्करभयं = चौरभयं, न = नैव भविष्यति । [ एतेन भौतिकदुःखाभावः ] नगराणि=

नगरादीनि, राष्ट्राणि = ग्रामजनपदादीनि, धनधान्ययुतानि = पशुहिरण्यधान्यबहुलानि, भविष्यन्ति।

[ भाषा ] रामजी के राज्य में, चोर का तथा अकाल का भय नहीं होगा, सब सुखी–धनधान्य पूर्ण होंगे।

❀ तिलकः ❀

भौतिकदुःखाभावमाह—न चापीति। क्षुद्भयं क्षुदुपशमोपायाभावजं, न च = नैव, भविष्यतीत्यनुषङ्गः ॥ ९३ ॥

नित्यं प्रमुदिताः सर्वे यथा कृतयुगे तथा।
अश्वमेधशतैरिष्ट्वा तथा बहुसुवर्णकैः ॥ ९४ ॥
गवां कोट्ययुतं दत्त्वा विद्वद्भ्यो विधिपूर्वकम्।
असंख्येयं धनं दत्त्वा ब्राह्मणेभ्यो महायशाः ॥९५॥
राजवंशान् शतगुणान् स्थापयिष्यति राघवः।
चातुर्वर्ण्यं च लोकेऽस्मिन्स्वे स्वे धर्मे नियोक्ष्यति ॥९६॥

❀ अभिनव-राजलक्ष्मीः ❀

[ अन्वयः ] यथा कृतयुगे, तथा सर्वे नित्यं प्रमुदिताः, भविष्यन्ति। अश्वमेधशतैः इष्ट्वा, तथा बहुसुवर्णकैः, गवां कोट्ययुतं विधिपूर्वकं विद्वद्भ्यः दत्त्वा, ब्राह्मणेभ्यः असंख्येयं धनं दत्त्वा, महायशाः राघवः—शतगुणान् राजवंशान् स्थापयिष्यति, च अस्मिन् लोके चातुर्वर्ण्यं स्वे स्वे धर्मे नियोक्ष्यति।

[ विग्रहः ] कृतं च तद्युगं च कृतयुगं, तस्मिन्। अश्वमेधानां शतानि-अश्वमेधशतानि, तैः। कोटीनामयुतं–कोट्ययुतं, तत्। न संख्येयम–असंख्येयम्, तत्। महद्यशो यस्यासौ–महायशाः। राज्ञां

वंशाः—राजवंशाः, तान्। शतं गुणाः येषान्तान्। चत्वारो वर्णाः चातुर्वर्ण्यम्।

[ अर्थः ] यथा कृतयुगे = सत्ययुग इव,-त्रेतायामपि, सर्वे = सर्वे लोकाः, नित्यं = सदैव, प्रमुदिताः = हृष्टाः भविष्यन्ति।

अश्वमेधशतैः = अनन्तैरश्वमेधाख्यैर्यज्ञैः, इष्ट्वा = देवान् भावयित्वा, बहुसुवर्णकैः = तन्नामकक्रतुविशेषैः, "सुबहूनि सुवर्णानि यत्रोपकरणं वृताः, विन्दन्ते स क्रतुः सद्भिर्मतो बहुसुवर्णकः" ॥ इत्युक्तलक्षणैः, तथा = इष्ट्वा।

विद्वद्भ्यः = पण्डितेभ्यः, गवां = धेनूनां, भूमीनां च, कोट्ययुतं = दशसहस्रकोटीपरिमितं धनं, विधिपूर्वकं = यथाविधि, दत्त्वा, ब्राह्मणेभ्यः = विप्रेभ्यः, असंख्येयम् = अनन्तं, धनं = गोहिरण्यादिरूपं, दत्वा = प्रदाय, महायशाः = महाकीर्तिः, राघवः = रामः, शतगुणान् = शतगुणितान्, राजवंशान् = राजकुलानि, स्थापयित्वा = संस्थाप्य, चातुर्वर्ण्यं = ब्राह्मणादीन्, अस्मिन् लोके = भूतले, स्वे स्वे धर्मे = स्वस्वधर्मेषु, नियोक्ष्यति = स्थापयिष्यति।

[ भाषा ] सत्ययुग की तरह त्रेता में भी राम-राज्य के समय प्रजा सर्वविध सुखसम्पन्न होगी। और रामजी अनन्त यज्ञकर ब्राह्मणों को दान दे, चारों वर्णों ( ब्राह्मण, क्षत्रिय, वैश्य, शूद्र, ) की रक्षा करेंगें। और अनेक राज्यों को स्थापित करेंगें ॥९४॥९५॥९६॥

❀ तिलकः ❀

नित्यमिति—कृतयुगे स्वाभाविकादधर्मासंबन्धान्नित्यं प्रजामोदः, त्रेतायामधर्मस्य पादांशेन संबन्धेऽपि रामपालनवैभवात्तदनाक्रमेण नित्य-प्रमोदवत्त्वम्। अथ रामस्य भाविवृत्तान्तमाह—अश्वेति। शतशब्दोऽनन्तवाची। इष्ट्वा दत्त्वेत्यादिस्वरूपकथनम्। न तु तेषां रामस्य स्वलोकप्राप्ति

प्रति हेतुतेति बोध्यम् । यत्तु कतककृताश्वमेधाद्यनुष्ठानस्य मानुषोपाधिप्रयुक्ताऽवर्ज्याघशमनद्वारा ब्रह्मलोकप्राप्तौ हेतुत्वमित्युक्तम् , तन्न । भगवदवताराणां पुण्यपापसंबन्धस्य सर्वतन्त्रविरुद्धत्वात् । अश्वमेधाद्यनुष्ठानं तु लीलामात्रं लोकोपदेशायेत्यन्यत्र विस्तरः ॥ ९५ ॥

**राजवंशानिति**—कामरूपकान्यकुब्जादितत्तद्राज्यपदस्थान्राजवंशान्-शतगुणाननेकगुणवृद्धिर्यथा भवति तथा स्थापयिष्यति, शाश्वततत्राज्य-प्रदानेनेति शेषः । चातुर्वर्ण्यं = चत्वारो वर्णाः, स्वार्थे ष्यञ्। नियोक्ष्यति—शङ्कितस्वधर्मभ्रंशमपीति शेषः ॥ ९६ ॥

**दशवर्षसहस्राणि दशवर्षशतानि च ।**
**रामो राज्यमुपासित्वा ब्रह्मलोकं प्रयास्यति ॥ ९७ ॥**

❀ अभिनव-राजलक्ष्मीः ❀

[ अन्वयः ] दशवर्षसहस्राणि दशवर्षशतानि च राज्यम् उपासित्वा रामः ब्रह्मलोकं प्रयास्यति ।

[ विग्रहः ] वर्षाणां सहस्राणि, वर्षसहस्राणि, दशगुणितानि वर्षसहस्राणि—दशवर्षसहस्राणि ।—दशगुणितानि वर्षशतानि—दशवर्षशतानि, तानि ।

**[ अर्थः ] दशवर्षसहस्राणि = दशगुणितानि वर्षसहस्राणि (दशसहस्रवर्षाणि) । दशवर्षशतानि च=दशगुणितशतवर्षाणि च, सहस्रवर्षाणीति यावत्, [ मिलित्वा एकादशसहस्रवर्षाणि ] राज्यं = प्रजापालनम्, अनुष्ठाय = विधाय, रामः = राघवः, ब्रह्मलोकं = शाश्वतं पदं, प्रयास्यति = गमिष्यति ।**

[ भाषा ] ग्यारह ११००० हजार वर्ष राज्य कर रामजी ब्रह्मलोक पधारेंगें ॥९७॥

※ तिलकः ※

अवतारत्यागकालमाह—दशेति। उपासित्वा नित्यवदनुष्ठायेत्यर्थः। ब्रह्मलोकं = मायिकं वैकुण्ठादिलोकम्। अनेन निजनित्यकर्मयोगोपेतस्यैव साक्षात्परम्परया ब्रह्मलोकप्राप्तिरिति ध्वनिः ॥ ९७ ॥

इदं पवित्रं पापघ्नं पुण्यं वेदैश्च सम्मितम्।
यः पठेद् रामचरितं सर्वपापैः प्रमुच्यते ॥ ९८ ॥

※ अभिनव-राजलक्ष्मीः ※

[ अन्वयः ] यः इदं पवित्रं पापघ्नं वेदैः सम्मितं च रामचरितं पठेत् ( सः ) सर्वपापैः प्रमुच्यते।

[ विग्रहः ] पापं हन्तीति–पापघ्नं, तत् रामस्य चरितं रामचरितं,तत्। सर्वाणि पापानि–सर्वपापानि, तैः।

[ अर्थः ] यः = यः कश्चित् लोकः, इदं = नारदोक्तं. पवित्रं= पावनं पापघ्नं = पापनाशनं, पुण्यं=पुण्यप्रदं, वैदैः = चतुर्भिरपि वेदैः, संमितं च = तुल्यं च, रामचरितं = रामकथां, पठेत् = अधीयीत, सः–सर्वपापैः = सर्वकल्मषैः, प्रमुच्यते = रहितो भवति।

[ भाषा ] इस रामायण का जो पाठ करेगा उसके सब पाप नष्ट हो जाएंगे ॥९९॥

※ तिलकः ※

अथ नारदः स्वोपदिष्टसंक्षेपरामायणपाठफलमुपदिशति–इदमिति। पवित्रं = चित्तशोधनम्। पुण्यं=सकलपुण्यसाधनम्। वेदैः संमितं = सकल-रहस्यवेदार्थप्रतिपादकत्वाद्वेदतुल्यम् ॥ ९९ ॥

**एतदाख्यानमायुष्यं पठन् रामायणं नरः ।**
**सपुत्रपौत्रः सगणः प्रेत्य स्वर्गे महीयते ॥ ९९ ॥**

❀ अभिनव-राजलक्ष्मीः ❀

[ अन्वयः ] आयुष्यम् एतत् रामायणम् आख्यानं पठन् नरः सपुत्रपौत्रः सगणः प्रेत्य स्वर्गे महीयते ।

[ विग्रहः ] रामोऽयनं—प्रतिपाद्यं यस्य तद्रामायणं, तत् । पुत्राश्च पौत्राश्च—पुत्रपौत्राः, तैः सहेति—सपुत्रपौत्रः । गणैः सहितः सगणः । आयुषे हितम्—आयुष्यम् ।

**[ अर्थः ] आयुष्यं = आयुर्वर्धनं, एतत् = पूर्वं कथितं, रामायणं = रामचरितं नाम, आख्यानकं = कथां पठन् = अधीयानः सन्, नरः = पुमान्, सपुत्रपौत्रः = पुत्रपौत्रान्वितः, सगणः = गणैः सहितः, सदास-दासीगणपरिवृतः—इति यावत्, प्रेत्य = परलोके, "प्रेत्यामुत्र भवान्तरे" इत्यमरः । स्वर्गे = सुरलोके, महीयते = पूज्यमानो मोदते ।**

[ भाषा ] जो इसका पाठ करता है, वह परलोक में भी सुख भोगता है, स्वर्ग में सम्मानित होता है ॥९९॥

❀ तिलकः ❀

सर्वपापमोक्षद्वारा मोक्षफलकत्वमुपपादितम् । पुण्यस्यापि त्रिगुणात्मकत्वेन पापतुल्यतया हेयत्वादिति मुमुक्षूणामपि प्रवृत्तय आह—एतदिति । आयुष्यमायुष्करणम् । आख्यानमाख्यायिका । रामोऽयनं प्रतिपाद्यो यस्य तद्रामायणम् । संज्ञात्वाण्णत्वम् । गणो दासीदासादयस्तैः सह । इहैहिकान्भोगान्भुक्त्वा, प्रेत्य = मृत्वा, स्वर्गे महीयते = स्वर्गिभिः सत्कृतो मोदत इत्यर्थः । पठन्निति हेतौ शता ॥ ९९ ॥

पठन् द्विजो वागृषभत्वमीयात्
स्यात् क्षत्रियो भूमिपतित्वमीयात् ॥
वणिग्जनः पण्यफलत्वमीयात्
जनश्च शूद्रोऽपि महत्वमीयात् ॥१००॥

❀ अभिनव-राजलक्ष्मीः ❀

[ अन्वयः ] पठन् द्विजः–वागृषभत्वम् ईयात्, क्षत्रियः स्यात्–भूमिपतित्वम् ईयात्, वणिग्जनः = पण्यफलत्वम् ईयात्, शूद्रोऽपि जनश्च महत्वम् ईयात्।

[ विग्रहः ] वाचि ऋषभः–वागृषभः, तस्य भावः–वागृषभत्वं, तत्–। भूमिपतेः भावः–भूमिपतित्वं, तत्–। पण्यैः फलं यस्यासौ तस्य भावस्तत्त्वं। [ पणमर्हति–पण्यं, तदेव फलं लाभो यस्य सः–पण्यफलः, तस्य भावः–पण्यफलत्वं, तत्––इति गोविन्दाचार्याः। ] महतो भावः–महत्त्वं, तत्––।

[ अर्थः ] पठन् = बालरामायणमधीयानः, द्विजः = विप्रः, वागृषभत्वं = वाक्पतित्वम्, ईयात् = प्राप्नुयात्, क्षत्रियः = राजन्यः, स्यात् = यदि भवेत् तदा, भूमिपतित्वं = राज्यम्, ईयात् = प्राप्नुयात्, वणिग्जनः = वैश्यो यदि स्यात् तदा, पण्यफलत्वं = बहुलाभं, ईयात् = प्राप्नुयात्, शूद्रोऽपि जनश्च = शूद्रोऽपि लोकश्चेत् तदाऽपि, महत्त्वं = स्वकुलश्रेष्ठतां––श्रेष्ठं पदम्, ईयात् = प्राप्नुयात्।

[ वाच्यप० ] पठता–ईयेत।

[ भाषा ] यदि ब्राह्मण इस मूलरामायण का पाठ करेगा तो बड़ा वाग्मी होगा, क्षत्रिय राज्य पाएगा। वैश्य की दूकान चलेगी ( लाभ होगा )।

शूद्र सुनेगा तो – 'महतो' 'लम्बरदार' 'मुखिया' आदि के पदों को पाएगा ॥१००॥

इति श्रीगुरुप्रसादशास्त्रिकलितायामभिनवराजलक्ष्म्यां
बालरामायणम् । पौष शु० १–१९९०

❀ तिलकः ❀

पठन्निति—द्विजो मुख्यद्विजो ब्राह्मणः, पठन्वागृषभत्वं शब्दब्रह्मपारगत्वं प्राप्नुयात् । स्यादिति यद्यर्थे । यदि क्षत्रियस्तदा रामायणं पठन्भूपतित्वमाप्नुयात् । पण्यैः क्रयद्रव्यैः साध्यं मूलाद्द्विगुणत्रिगुणवृद्ध्यादिरूपं फलं यस्य तत्त्वं प्राप्नुयात् । धनसमृद्धिं प्राप्नुयादिति फलितोऽर्थः । शूद्रोऽपि जनस्त्रैवर्णिकदासः । अत्र शृण्वन्नित्यध्याहारः । महत्त्वं द्विजेतरसर्वप्रजाभ्यः श्रैष्ठ्यं महत्त्वं, देहान्ते स्वोपरितनवर्णप्राप्तिलक्षणं च महत्त्वं प्राप्नुयात् । अस्य गायत्र्यर्थप्रतिपादकत्वध्वननाय गायत्र्यादिमाक्षरेणोपक्रम्य 'यादि'ति गायत्र्यन्तिमाक्षरेण समापितवान् ॥ १०० ॥

इति रामराजविरचिते रामाभिरामीये तिलकाख्यव्याख्याने
प्रथमः सर्गः ।